स्तृणसारविकारैः स्वेदितमभ्रं, स्वेदविधिरुक्तः, पुनर्घनस्य पिण्डं बद्ध्वा; कैः सह ? माहिषदधिदुग्धमूत्रशकृदाज्यैः कृत्वा; महिष्या इदं माहिषं. एवंभूतं यद्दधि, दुग्धं, मूत्रं, शकृद्विष्ठा, आज्यं घृतं चैतैः पिण्डं बद्ध्वा । अथेति समुच्चये । पञ्चगव्यैः गवां दुग्धदधिमूत्रशकृदाज्यैः, संयुक्तः कार्यः, पिण्डं बद्ध्वेत्यर्थः । एतत्पिण्डं लोहनिभं मुण्डप्रभं सत्वं पातयति, पूर्वसंबन्धात् 'घनस्य' इत्यध्याहारः ॥ १० ॥

सूर्यातपपीतरसाः स्वल्पं मुञ्चन्ति धातवः सत्वम् ।

स्वस्थानस्थाः सन्तो मुञ्चन्ति त एव भूयिष्ठम् ॥ ११ ॥

सूर्यातपपीतरसा इति सूर्यातपे सवितृघर्मे पीताः शोषिता रसा द्रवा यैः, एवंविधा धातवो ध्माताः सन्तः स्वल्पं ईषन्मात्रं सत्वं मुञ्चन्ति त्यजन्ति । पुनस्त एव सूर्यातपपीतरसा धातवः स्वस्थानस्थाः स्वकीयं यत्स्थानं द्रवेण स्थानपिण्डं रूपं (?) तस्मिन् तिष्ठन्तीति, एवंविधाः सन्तो बहलं भूयिष्ठं सत्वं मुञ्चन्ति द्रवन्तीत्यर्थः । सूर्यातपपीतरसा इति केषां ? सूर्यावर्तकदलीवन्ध्याकर्कोटक्यादीनां द्रावकौषधीनाम् ॥ ११ ॥

बहुगम्भीरं ध्मातो वर्षति मेघः सुवर्णधाराभिः ।

देवमुखतुल्यममलं पतितं सत्वं तथा विन्द्यात् ॥ १२ ॥

पतितसत्वलक्षणमाह–बहुगम्भीरमित्यादि । मेघो घनो बहुगम्भीरं यथा स्यात्तथा ध्मातः सन्, सुवर्णधाराभिः शोभनवर्णधाराभिः, वा सुवर्णवत् कनकवत् वर्णो यासां ताभिः, निर्मलत्वात् प्रकाशकत्वाच्च, वर्षति धारापातं विदधाति । कथंभूतं ? देवमुखतुल्यं वह्निना तुल्यं समं; अमलं निर्मलं, हरितपीतरक्तादिधूमरहितत्वात्; पतितं सत्वं तथा विन्द्यात् घनस्येत्यर्थः । तथा ग्रन्थान्तरे,—"भस्त्रानलेन तीव्रेण महाज्वाले हुताशने । अतिदीप्ते भवेद्बुद्धा अङ्गराः क्षयमागताः ॥

---

१ टीकाकारेणात्र विपरीतोऽर्थो गृहीत इति भाति । सूर्यातपेन पीताः रसाः येषां ते धातवः स्वल्पं सत्वं मुञ्चन्ति, त एव, त एव धातवः स्वस्थानस्थाः भूगर्भस्थाः न तु सूर्यातप आविष्कृताः सन्तो भूयिष्ठं सत्वं मुञ्चन्तीत्याशयः प्रतिभाति । अत एवोक्तं रसरत्नसमुच्चये –"राजहस्तादधस्ताद्यत्समानीतं घनं खनेः । भवेत्तदुक्तफलदं, निःसत्वं निष्फलं परम्"–इति । २ देवमुख ग. । ३ विद्यात् ख. ४ बुद्धा नाम ज्वलिता जागृता इत्यर्थः ।

पुनरन्या न चेन्मूर्ध्नि द्विस्त्रिर्वाराणि बुद्धिमान् । यदा दीप्तो भवेद्वह्निः शुद्धज्वालो महाबलः ॥ पतितं तु तदा विन्द्यात् तत्सत्वं नात्र संशयः । पतितं तु पृथक्कार्यं किट्टाङ्गारविवर्जितम् ॥ निर्गुणं[1] लक्षयित्वा तु पुनर्ध्माप्यो यथावता । द्विस्त्रिरेवमशेषं तु ध्मातः सत्वं विमुञ्चति"—इति ॥ १२ ॥

यदि लोहनिभं[2] पतितं[3] जातं गगनस्य तद्रसश्चरति ।

मिलति च सर्वद्वन्द्वे[4] ह्यौषधिभिश्चरति विनापि मुखैः ॥ १३ ॥

लोहनिभं सत्वं सर्वोत्तममिति दर्शयन्नाह—यदीत्यादि । यदि चेद्गगनस्य जातं अभ्रकोद्भवं सत्वं मुण्डनिभं पतितं तदा तत्सत्वं रसः पारदश्चरति ग्रसति । कैर्विना ? मुखैर्विनापि रसस्य । लोहनिभं अभ्रसत्वं सूचितम् । अतिप्रीतित्वात्सर्वोत्तमत्वम् । सर्वद्वन्द्वे समस्तयुगलमिलापे मिलति च एतत्सत्वरसयोश्चेन्मेलनं क्रियते तर्हि एकशरीरतां याति, नान्यथा रसकादिभिः कृत्वा चरति, तदौषधीभिः कृत्वा चरति तदौषधीभिः ता एव पूर्वोक्ता वासनौषधयः ताभिः । किंभूतः समुखत्वेनेति ॥ १३ ॥

माक्षिकसहितं गगनं ध्मातं सत्वं मुखप्रदं भवति ।

तदनु च नागैर्वङ्गैः सहितं च[5] मुखप्रदं सत्वम् ॥ १४ ॥

माक्षिकसत्वान्तरसंयोगात् सत्वस्य गुणाधिक्यं दर्शयन्नाह—माक्षिकेत्यादि । गगने भवं गगनं अण्प्रत्ययान्तं, 'णितो वा' ( सा. अ. ६, पा. १, सू. २४ ) इति सूत्रेण न वृद्धिः, गगनं अभ्रसत्वम् । माक्षिके भवं माक्षिकं माक्षिकसत्वं, तेन सहितं पूर्वसत्वं चेत् ध्मातं तदुभयसत्वं मुखप्रदं भवति, 'रसस्य' इति शेषः । मुखं प्रकृष्टेन ददातीति समासः । तदनु च तत्पश्चाच्च नागैर्वङ्गैः सहितं पूर्वं यद्गगनं अभ्रसत्वं मुखप्रदमित्यर्थः । वा 'सुखप्रदं' इति पाठः; अस्मिन् योगे बहुक्लेशं विहाय सुखेन चारणं भवतीति विकल्पार्थः ॥ १४ ॥

माक्षिकसत्वे योगाद्घनसत्वं चरति सूतको निखिलम् ।

नियतं गर्भद्रावी स रज्यते[6] बध्यते चैवम् ॥ १५ ॥

---

१ निर्गुणं नाम किट्टकाचादिरहितं विशुद्धमित्यर्थः । २ लोहाभं ख.ग. । ३ निपतितं ग. । ४ सर्वे ग. । ५ ख. पुस्तके नास्ति । ६ रञ्ज्यते इति पाठान्तरम् ।

माक्षिकसत्वं मुख्यत्वेनाह-माक्षिकेत्यादि। सूतकः पारदो, घनसत्वं अभ्रसत्वं, निखिलं समस्तं चरति । कस्मात् ? माक्षिकसत्वे योगात्, माक्षिकं स्वर्णमाक्षिकं तत्सत्वे यो योगस्तस्मात् । नियतं निश्चितम् । माक्षिकसत्वयोगाद्धनसत्वं चरति, रसो गर्भद्रावी भवति, गर्भे द्रावयति सत्वं द्रवरूपं विधत्ते यः स तथोक्तः। सूतस्योदरे माक्षिकाभ्रसत्वं द्रुतिरूपं तिष्ठतीत्यर्थः । एवममुना विधानेन सह सूतकः पारदो रज्यते रागवान् भवति, बध्यते बद्धश्च भवतीत्यर्थः ॥ १५ ॥

सत्वं घनस्य कान्तं तालकयुक्तं सुरुन्धितं ध्मातम् ।
वारैस्त्रिभिरिह सत्वं भवति रसेन्द्रबन्धकारि परम् ॥१६॥

माक्षिकयोगानन्तरमपरोऽभिधीयते—सत्वमित्यादि । घनस्याभ्रस्य सत्वं, तथा कान्तं लोहविशेषं, तालकयुक्तं तालकेन हरितालेन युक्तं सुरुन्धितं ध्मातं सत् त्रयमपि सत्वरूपं भवति, यदैकवारध्मनेन सत्वं न मिलति तदा पुनर्द्वित्रिवेलाभिर्धमनं कार्यम् । समभागतालकयोजनं घनसत्वमाक्षिकसत्वयोगद्रावणाद्धमितादित्यर्थं तत्सत्वं रसे पारदे बन्धकारि भवति परममुत्कृष्टं बन्धनप्रदं भवति । तत्सत्वस्य चारणतो रसो बन्धनमवाप्नोतीति भावः । कान्तलक्षणं,–"पात्रे यस्मिन् प्रविशति जले तैलबिन्दुर्न सर्पेत् हिङ्गुर्गन्धं विसृजति निजं तिक्ततां निम्बकल्कः ॥ पाके दुग्धं भवति शिखराकारतां नैव भूमौ कान्तं लोहं विदुरिति च तल्लक्षणोक्तं न चान्यत्—" इति ॥ १६ ॥

लोहं चाभ्रकसत्वं तालकसमभागसारितं चरति ।
अभिषवयोगाच्चाङ्गुलिमृदितं गर्भे च तद् द्रवति ॥ १७ ॥

कान्ताभ्रसत्वालयोगकरणमाह-लोहमित्यादि । चेति समुच्चये । लोहं पूर्वोक्तलक्षणं मुण्डादिकं अभ्रसत्वं च, तालकसमभागसारितं तालकस्य समभागेन पूर्वविधानेन मुखादिना यत्सारितं एकशरीरतां नीतं, 'सृ' गतावित्यस्य धातो रूपं सारितं, प्रमिलितमित्यर्थः; एवंविधं कान्ताभ्रसत्वालं रसश्चरति । च पुनः अङ्गुलिमृदितं अङ्गुलिना मर्दितं तत् कान्ताभ्रसत्वालं गर्भे रसोदरे द्रवति तत्स्वरूपत्वेन मिलति । कस्मात् ? अभिषवयोगात्; अभिषवः संमर्दनं, तद्योगात् । लोहस्य त्रयोदशभेदानां मध्यात् केनापि भेदेन सहयोगः कार्य इति लोहशब्देन ध्वनितम् ॥ १७ ॥

---

१ सुरोधितं ख. । २ रसे बन्धकारि इति पाठान्तरम् ।

**वङ्गमथो घनसत्वं तालकषड्भागसारितं चरति ।**
**अभिषवयोगाच्चरति व्रजति रसो नात्र सन्देहः ॥ १८ ॥**

लोहयोगमुक्त्वा वङ्गयोगमाह-वङ्गमित्यादि । अथ लोहकथनानन्तरं वङ्गं खुरसंज्ञकं अभ्रकं च एतद्द्वयं, तालकषड्भागसारितं तालकस्य षडंशेन एकशरीरतां नीतं तत्स्वरूपं रसश्चरति । कस्मात् ? अभिषवयोगात्; अभिषवः संमर्दनं तद्योगात्; 'षुञ्' अभिषवे, इत्यस्य धातो रूपं अभिषवः । पुनः रसश्चरति मिलति । चारितं यत् तद्द्रवति, तद्द्रुतं रसे व्रजति पृथक्त्वात्संमिलति नात्रसन्देहः निःसंदिग्धमिव । वङ्गस्य लघुद्रावित्वात् षडंशयोगस्तालकस्य युक्तः; लोहजातेः काठिन्यात् समभागत्वमुदितम् ॥ १८ ॥

**बहलं सुवर्णवर्णं निचुलपुटैः पतति पञ्चभिः सत्वम् ।**
**वटकीकृतमृतगगनं निरञ्जनं[1] किट्टरहितं च ॥ १९ ॥**

अभ्रसत्वविधानमाह-बहलमित्यादि । वटकीकृतं च तन्मृतं च गगनं तथोक्तं; न वटको वटकः क्रियत इति वटकीकृतं, अत्र अभूततद्भावे च्विः प्रत्ययः । पञ्चभिर्निचुलपुटैः पञ्चसंख्याभिर्वेतसवृक्षद्रवभावनाभिः भावितं यन्मृतगगनं मृताभ्रं वटकीकृतं, तत्सत्वं पतति, तद्द्रावकौषधयोगं विधाय वह्निना विधमनादिति शेषः । कियन्मानं सत्वं पतति ? बहलं, बहु अन्यविधेराधिकम् । कीदृशं ? स्वर्णवर्णं पीतश्वेतं प्रकाशाढ्यं, पुनर्निरञ्जनं निर्मलं, किट्टरहितं च । अस्मिन् सत्वे काचकिट्टाभावः । सर्वोत्कृष्टविधिरयं, पूर्वमुदितात् बहलसत्वपातादित्यर्थः ॥ १९ ॥

**तच्चूर्णीकृत्य ततः क्षाराम्लैर्भावितं घनं बहुशः ।**
**सूष्टित्रयनीरकणातुम्बुरुरसमर्दितं चरति ॥ २० ॥**

केवलसत्वचारणविधानमाह—तदित्यादि । ततस्तदभ्रसत्वपातनविधेरनन्तरं, तदेवाभ्रसत्वं चूर्णीकृत्य कल्कं विधाय, क्षाराम्लैर्भावितं कुर्यात्; क्षाराः स्वर्जिकादयः, अम्ला जम्बीरादयः, तैर्बहुशो बहुवारं घर्मपुटितं कुर्यादित्यर्थः । पुनः सूष्टित्रयनीरकणातुम्बुरुस-

---

१ निरञ्जन ख. ।

मर्दितं सृष्टिः पूर्वोक्ता तत्त्रयं मूत्रशुक्रशोणितमिति, नीरकणा जलपिप्पली, तुम्बुरु प्रतीतं, एतेषां रसेन मर्दितं कुर्यात् । अभ्रसत्त्वमेवं कृतं सत् चरति ग्रसति, 'रसः' इत्यध्याहारः ॥ २० ॥

घनसत्त्वशुल्बमाक्षिकसमभागे[1]नियोजितं तथा[2] मिलितम् ।
तच्छुल्बाभ्रं कथितं चरति रसो जीर्यति क्षिप्रम् ॥ २१ ॥

अथ शुल्बाभ्रमाह—घनेत्यादि । घनसत्त्वशुल्बमाक्षिकसमभागनियोजितं घनसत्त्वमभ्रसत्त्वं, शुल्बं ताम्रं, माक्षिकं स्वर्णमाक्षिकं, समभागेन तुल्यभागेन नियोजितं प्रयुक्तं, तन्मिलितं सत् शुल्बाभ्रं कथितम् । अत्र शुल्बं कीदृशं प्रयोज्यं तदाह,--"द्वावर्कौ म्लेच्छनेपालौ रसे नेपाल उत्तमः । घनघातसहः स्निग्धो रक्तपत्रोऽमलो मृदुः ॥ म्लेच्छस्तु क्षालितः कृष्णो रूक्षस्निग्धो घनासहः । मिश्रितो नागलोहाभ्यां न श्रेष्ठो रसकर्मणि"-इति; अतो नेपालकं ग्राह्यमित्यर्थः । तच्छुल्बाभ्रं रसः क्षिप्रं चरति, पुनः क्षिप्रं शीघ्रं तच्छुल्बं जीर्यति जारणमाप्नोति । अत्र माक्षिकयोगः शुल्बाभ्रसत्त्वमेलनार्थं रसप्रीत्येति भावः ॥ २१ ॥

इति ताप्यशुल्बसहितं घनसत्त्वं लो[3]हखल्वके मृदितम् ।
चरति रसेन्द्रः काञ्जिकवेतसजम्बीरबीजपूराम्लैः[4] ॥ २२ ॥

शुल्बाभ्रचारणविधानमाह—इतीत्यादि । इति पूर्वोक्तं; ताप्यशुल्बसहितं, ताप्यं स्वर्णमाक्षिकं, शुल्बं ताम्रं नेपालसंज्ञकं, ताभ्यां सहितं मिश्रितं, घनसत्त्वं तप्तलोहखल्वके मृदितं कार्यं मर्दनीयं; कैः कृत्वा ? काञ्जिकवेतसजम्बीरबीजपूराम्लैः काञ्जिकमुक्तविधानं सौवीरं, वेतसं चुक्रं, जम्बीरं प्रसिद्धं, बीजपूरो मातुलुङ्गः, एतेषामम्लैः द्रवरूपैः । ततः शुल्बाभ्रं रसेन्द्रः पारदश्चरति ग्रसति । लोहखल्वस्य कथनात् तप्तखल्वके मर्दनं कुर्यादिति तात्पर्यार्थः ॥२२॥

इति तीक्ष्णशुल्बनागं माक्षिकयुक्तं[5] च तत्कृतं खोटम् ।
तद्ग्रस[6] च पुटविधिना निर्व्यूढं सत्त्वरञ्जकं भवति ॥ २३ ॥

प्रकारान्तरमाह—इतीत्यादि । इति पूर्वोक्तलक्षणं, तीक्ष्णशुल्बनागं तीक्ष्णं ताम्रं नागं च एतत्त्रयं, माक्षिकयुक्तं स्वर्णमाक्षिकयुतं, समं

१ समभागं ख. ग. । २ ख. ग. पुस्तके नास्ति । ३ सोष्ण ख. ग. । ४ बीजपूररसैः ख. ग. । ५ 'समं च कृतखोटम्' ख.ग. । ६ तम् ख.ग. ।

तुल्यभागं कुर्यात् । तत्कृतं खोटं तैः सर्वैः पिष्टीस्तम्भेन खोटभस्म कार्यम् । पुटविधिना वह्निपुटविधानेन तत्कृतं खोटं भस्म कार्यं; पुनः तद्भस्म, सत्वे निर्व्यूढं निर्वाहितं सत्, सत्वरञ्जकं भवति, खसत्वे अभ्रसत्वे रागदायि भवति, रञ्जितं तत्सत्वं रसरञ्जकं भवेदिति भावः ॥ २३ ॥

चार्यं यत्नेन रसे घनसत्वं तद्विधं घनं तस्य ।

संयोज्य सर्वबीजं निर्वाह्यं[1] द्वन्द्वसङ्करतः ॥ २४ ॥

रञ्जितघनसत्वस्य चारणमाह—चार्यमित्यादि । तद्विधं पूर्वरञ्जितं, घनसत्वमभ्रसत्वं, च घनं केवलघनोद्भवं सत्वं अरञ्जितं, रसे पारदे चार्यं ग्रासग्रसनमानेनैतदभ्रसत्वं रसे संयोज्यम् । वा सत्वे सर्वबीजं सर्वं रागदायि द्रव्यं संयोज्य निर्वाह्यं निर्वाहितं कुर्यात् । कुतः? द्वन्द्वसंकरतः द्वन्द्वानां संकरो मेलापः 'सङ्करोऽवकर' इत्यमरः । निर्वाह्य इति 'वह' प्रापणे इत्यस्य रूपं पूर्ववत् । निरव्ययं निश्चयार्थे "निर्निश्चयनिषेधयोः"—इत्यमरः ॥ २४ ॥

अभ्रकचारणमादौ गर्भद्रुतिचारणं च हेम्नोऽन्ते ।

यो जानाति न वादी वृथैव सोऽर्थक्षयं कुरुते ॥ २५ ॥

अथ रसचारणे[2] ज्ञेयमाह—अभ्रकेत्यादि । यो वादी रसकर्ता, आदौ प्रथमं, अभ्रचारणं न जानाति यथा रसोऽभ्रकं चरति ग्रसति, पुनः तत्पश्चात् गर्भद्रुतिचारणं यद्रसगर्भे द्रुतं द्रवरूपं तिष्ठत्यभ्रादिकं तस्य चारणं ग्रसनं, पुनरन्ते हेम्नः स्वर्णस्य चारणं ग्रसनं न जानाति; स वृथैव मिथ्यैव अर्थक्षयं धननाशं कुरुते, कार्यसिद्धेरभावात् । सर्वज्ञ एव रसक्रियायां प्रवर्ततेति भावः ॥ २५ ॥

गगनग्रासरहस्यं वक्ष्याम्येकं घनार्कसंयोगात् ।

केवलमभ्रकसत्वं ग्रसते यत्नान्न सर्वाङ्गम् ॥ २६ ॥

इति परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पादविरचिते

रस हृदयतन्त्रे सत्वाभ्रकचारणात्मकश्चतुर्थोऽवबोधः ।

ग्रासरहस्यमाह—गगनेत्यादि । अहं श्रीमद्गोविन्दभगवत्पूज्यपादाचार्यः, एकमद्वितीयं, गगनग्रासरहस्यं अभ्रककवलने ग्रासकौतुकं,

---

१ निर्वाह्य ख. ग. । २ रसचारणायां ख. ग. ।

वक्ष्यामि कथयामि । कस्मात् ? घनार्कसंयोगात्; घनं अभ्रकसत्वं, अर्कस्ताम्रं, एतयोः संयोगः, तस्मात् उभयसत्वकृतखोटं चार्यम् । अथशब्दः पक्षान्तरसूचकः । अभ्रसत्वस्य यस्य धातो रूपं, तेन सह यस्य धातोर्वा संयोगो भवति द्वन्द्वभावात्सङ्करतः तत्संयुक्तमभिधानं भवति; यथा – शुल्वाभ्रं, नागाभ्रं, वङ्गाभ्रं, माक्षिकाभ्रं, हेमाभ्रमिति एवं सर्वत्र संयोगान्नमनिष्पत्तिः । "ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता । बहिरेव द्रवीकृत्य घनसत्वादिकं खलु । जारणाय रसेन्द्रस्य सा बाह्यद्रुतिरुच्यते–" इति ॥ २९ ॥

इति श्रीमत्कुरलवंशपयोधिसुधाकरमिश्रमहेशात्मजचतुर्भुजाविरचितायां मुग्धावबोधिन्यां रसहृदयटीकायां सत्वाभ्रकचारणात्मकश्चतुर्थोऽवबोधः ॥ ४ ॥

## अथ पञ्चमोऽवबोधः ।

### अथ गर्भद्रुतिबाह्यद्रुतिजारणम् ।

यदि घनसत्वं गर्भे न पतति नो वा द्रवन्ति बीजानि ।
न च बाह्यद्रुतियोगस्तत्कथमिह बध्यते सूतः ॥ १ ॥

वाचोमरीचिभिस्तस्तं तोषय जनकैरवम् ।
कुमुदानि च कासारोद्धृतानि त्रिरभासया ॥ १ ॥

अथ गर्भद्रुतिबाह्यद्रुतिप्रशंसनमाह—यदीत्यादि । यदि चेद्घनसत्वमभ्रसत्वं गर्भे पारदस्यान्तर्न पतति द्रवत्वं नाप्नोति, वा बीजानि शुल्वाभ्रादीनि पारदस्योदरे नो द्रवन्ति न रसरूपा भवन्ति, च पुनः बाह्यद्रुतिर्न युज्यते; चेदेवं न स्यात्तर्हि इह अस्यां क्रियायां प्राप्तायां सत्यां सूतो रसः कथं बध्यते? अन्यथा न कोऽप्युपायः ॥ १ ॥

गर्भद्रुत्या रहितो ग्रासश्चीर्णोऽपि नैकतां याति ।
एकीभावेन विना न जीर्यते तेन सा कार्या ॥ २ ॥

गर्भद्रुतेराधिक्यं दर्शयन्नाह-गर्भेत्यादि । चीर्णोपि ग्रासः चारणतां प्राप्तोऽपि कवलः, यदि गर्भद्रुत्या रहितो भवेत् रसस्योदरे रसरूपकरण-

---

१ ख पुस्तके नास्ति । २ 'आर्यो' इति पाठान्तरम् ।

वर्जितो भवेत्तदा एकतां न याति, रसरूपो न भवति । पुनरेकीभावेन विना ग्रासो न जीर्यते जारणत्वं नाप्नोति । तेन हेतुना गर्भद्रुतिपूर्विका जारणा कार्या, रसबन्धे चारणं हेतुरिति भावः ॥ २ ॥

बीजानां संस्कारः कर्तव्यः कोऽपि तादृशः प्रथमम्।
येन द्रवन्ति गर्भे रसराजस्याम्लवर्गेण ॥ ३ ॥

जारणायां प्रथमं कर्तव्यमाह—बीजानामित्यादि । बीजानां शुल्बा-आदीनां, कोऽप्यनिर्वचनीयः संस्कारो गर्भे द्रुतिकारकः प्रथमं कर्तव्यः; संस्क्रियत इति संस्कारः । किंविशिष्टः ? तादृशः; तैः बीजैः सदृशः, यथा बीजानि शक्तिमन्ति सन्ति तथा संस्कारोपि शक्तिमान् कर्तव्य इत्यर्थः । संस्कारः केन कर्तव्यः ? अम्लवर्गेण जम्बीरादिना । येन संस्कारेण रसराजस्य गर्भे रसोदरे बीजानि धातूपधातुजातानि शुल्बा-आदीनि द्रवन्तीत्यर्थः ॥ ३ ॥

सममाक्षिककृतवापं[2] सममाक्षिकसत्त्वसंयुतं हेम।
गर्भे द्रवति च जरति[3] च जरितं बध्नाति नान्यथा सूतम्[4] ॥४॥

हेमबीजप्रशंसनमाह—समेत्यादि । सममाक्षिककृतवापं समभागं तुल्यांशं हेम्ना यन्माक्षिकं तस्य कृत्वा वापो वारंवारमाक्षेपोऽग्नियोगाद्यस्मिन् तथोक्तं; पुनस्तद्धेम सममाक्षिकसत्त्वसंयुतं हेम्ना समं तुल्यं यन्माक्षिकसत्त्वं तेन संयुतं खोटं कुर्यात् । तत्खोटरूपं हेम गर्भे पारदान्तर्द्रवति । पुनस्तद्द्रावितं हेम जरति जीर्णतामाप्नोति । तद्धेम जरितं सत् सूतं रसेश्वरं बध्नाति । अन्यथा अन्यप्रकारेण सूतो बन्धनं नाप्नोति । माक्षिकस्य वापो हेम्नो वर्णोत्कर्षप्रद इति भावः ॥ ४ ॥

माक्षिकसत्त्वं हेम्ना पादादिकं[5] जारितं द्रुतं सूते।
ताराऽरिष्टं कुरुते वरकनकं पत्रलेपेन ॥ ५ ॥

माक्षिकसत्त्वचारणाद्रसे गुणोत्कर्षमाह—माक्षिकसत्त्वमित्यादि । माक्षिकसत्त्वं वक्ष्यौषधयोगद्रुतं यद्धेममाक्षिकसारं, हेम्ना कनकेन सह, सूते पारदे, पूर्वं यद्द्रुतं पुनः पादादिकजारितं पादादिकविभागेन सत्त्वेन निःशेषतामाप्तं सत्; अयं सूतः ताराऽरिष्टं तारं रूप्यादि, अरिष्टं शुभं,

---

१ आयुर्वेदप्रकाशे तु "बीजानां संस्कारः कर्त्तव्यस्ताप्यसत्त्वसंयोगात्" इति पाठः समुपलभ्यते । २ वापः ग. । ३ चरति ख. ग. । ४ सूतः ग. । ५ पादादिजा० ख. ग. ।

वरकनकं कुरुते पूर्णवर्णमित्यर्थः । केन विधानेन ? पत्रलेपनेन पत्रं कण्टकभेदि, तत्र योऽसौ लेपः, बहिर्योगादिति शेषः, तेन । हेममाक्षिक-सत्वजारितस्य रूप्यपत्रलेपेन कनकं स्यादिति व्यक्तार्थः ॥ ५ ॥

समरसतां यदि यातो वस्त्राद्गलितोऽधिकश्च तुलनायाम् ।
ग्रासो द्रुतः स गर्भे द्रुत्वाऽसौ जीर्यते क्षिप्रम् ॥ ६ ॥

गर्भद्रुतेर्लक्षणमाह—समेत्यादि । यदि ग्रासः समरसतां यातो भवेद्रसतुल्यरूपतां प्राप्तो भवेत्, पुनर्वस्त्राद्गलितो भवेत्, चतुर्गुणश्वेत-वस्त्रान्निःसृतो भवेत्, पुनस्तुलनायां तुलाकर्मणि यदाधिकोऽपि स्यात्तदा गर्भे पारदास्यान्तर्द्रुतो ग्रासो ज्ञातव्यः, गर्भद्रुतो रसो वेदितव्य इति व्यक्तार्थः । पुनरसौ रसो द्रुत्वा द्रवरूपं प्राप्य शीघ्रं जीर्यति धातूनपि, विधानेनेति शेषः ॥ ६ ॥

न बिडैर्नापि क्षारैर्न स्नेहैर्द्रवति हेम तारं वा ।
माक्षिकसत्वेन विना त्रिदिनं निहितेन रक्तेन ॥ ७ ॥

माक्षिकसत्वोत्कर्षमाह-नेत्यादि । माक्षिकसत्वेन विना स्वर्ण-माक्षिकसारमन्तरेण, हेम कनकं, वा तारं रूप्यं, न द्रवति । कैः कृत्वा ? विडैः कृत्वा; शङ्खचूर्णार्कक्षारादिकृतपिण्डैः कृत्वा; ग्रन्थान्तरे च,—"लवणक्षारोपरसैरेभिरम्लैर्बिडो मतः । समे गर्भे तु संस्थाप्यो ह्यनेनैव द्रवीभवेत्"—इति । न केवलं बिडैः किन्तु क्षारैरपि न; क्षारैः स्वर्जिकायवक्षारटङ्कणाद्यैः । न केवलं क्षारैः किन्तु स्नेहैरपि न; स्नेहानि यथा,—"कङ्गुकं विनादोषां करञ्जश्रीफलोद्भवम् । कटु-वार्तारिसिद्धार्थसोमराजीबिभीतजम् । अतसीजं महाकालानिम्बजं

---

१ "स्वर्णे सममाक्षिकेन वापो देयः पुनः समानमाक्षिकसत्वेन संयोगात् खोटो भवति । तेन सूते (तो)जारयेत् । पादादि जारिते सति रूप्यपत्रलेपेन वरकनकं भवति" इति ख. ग पुस्तके ऽधिकः पाठः समुपलभ्यते । २ द्रुत्या ख.ग.। ३ ग पुस्तके "सः तुल्यरूपतां प्राप्तः तुलायां अधिकः तदा गर्भे पारदस्यान्तः द्रवरूपं ज्ञेयं पुनः शीघ्रं जीर्यति" इति पाठः । ४स्नेहैर्न ग.। ५ कङ्गुणीतुम्बिनीघोरा ग.। कङ्गुणी तुम्बिनीदोषा ग. । कङ्गुणीतुम्बिनीघोषा ख. । ६ वार्ताक इति रसरत्नसमुच्चये । ७ विभीतज ग. । ८ महाकालं ग. ।

तिलजं तथा । अपामार्गदेवदालीदन्तीतुम्बराविग्रहा (?) अङ्कोलोन्मत्त-भल्लातफलेभ्यस्तैलसंभवः"—इति । तैलैरपि न द्रवति । पुनर्माक्षिक-सत्वेन गर्भे द्रुतिर्जायते किंविशेषेण माक्षिकसत्वेन ? रक्तेन रक्तवर्गेण त्रिदिनं दिनत्रयं निहितेन रक्तवर्गान्तःस्थापितेन । रक्तवर्गो यथा,—"दाडिमं किंशुकं चैव बन्धूकं च कुसुम्भकम् । समाञ्जिष्ठो हरिद्राद्यो लाक्षारससमन्वितः ॥ रक्तचन्दनसंयुक्तो रक्तवर्गः प्रकीर्तितः"—इति ॥७

लवणं देवीस्वरसप्लुतमहिपत्रं विचूर्णितं शिलया ।
एतत्पुटनात्रितयात्सुमृतं संस्थापयेदयःपात्रे ॥ ८ ॥
विहिताऽर्धाङ्गुलनिम्ना स्फुटविकटकटोरिका मुखाधारा ।
तस्योपर्यादेया कटोरिका चाऽङ्गुलोत्सेधा ॥ ९ ॥
विहितच्छिद्रत्रितया शस्ता चतुरङ्गुलोर्ध्वच्छिद्रेषु ।
लोहशलाका योज्यास्तत्रापि च हेमपत्राणि ॥ १० ॥
संस्थाप्य विधूप्यन्ते यन्त्राधस्तात् प्रदीपयेदग्निम् ।
धूमोपलेपमात्राद्भवन्ति कृष्णानि हेमपत्राणि ॥ ११ ॥
तान्यग्नितापितानि च पश्चाद्यन्त्रे मृतानि धूमेन ।
पाचितहेमविधानाज्जरति रसेन्द्रो द्रवति गर्भे च* ॥ १२ ॥

---

१ अपामार्गो ग. । २ तुम्बुरुविग्रहात् ग. । ३ फलानां ग. । ४ रक्तवर्गा प्रकीर्तिताः ग. । ५ खलु शलाका ख.ग. । ६ धूपेन ख ग. । ७ जरयति रसेन्द्रो द्रवति च गर्भे च ग. । द्रवति इत्यत्र द्रवन्ति इति केचित् ।

* धूपयन्त्रमन्यत्र यथा-विधायाष्टाङ्गुलं पात्रं लौहमष्टाङ्गुलो-च्छ्रयम् । कण्ठाधो द्व्यङ्गुले देशे जलाधारं हि तत्र च ॥ तिर्यक् लोहशलाकाश्च तन्वीस्तिर्यग्विनिक्षिपेत् । तनूनि स्वर्णपत्राणि तासा-मुपरि विन्यसेत् । पत्राधो निक्षिपेद् धूमं वक्ष्यमाणमिहैव हि । तत्पत्रं न्युब्जपात्रेण च्छादयेदपरेण हि । मृदा विलिप्य सन्धिं च वह्निं प्रज्वा-लयेदधः । तेन पत्राणि कृष्णानि हतान्युक्तविधानतः । रसश्चरति वेगेन द्रुतं गर्भे द्रवन्ति च ॥

स्वर्णजारणयन्त्रविधानमाह—लवणमित्यादि । प्रथमं लवणं सैन्धवं देवीस्वरसप्लुतं कुर्यात् ब्राह्मीस्वकीयैरसेन संमिश्रं कुर्यात् । पुनर्ब्राह्मीरसप्लुतं लवणं च अहिपत्रं[4] ताम्बूलिदलं तच्च द्वयं शिलया[5] विततग्रावेण चूर्णितं पेषितं कुर्यात् । पुनरेतदयःपात्रे लोहभाजने संस्थापयेत् । एतत् स्थापितं द्रव्यं पुटत्रितयात्त्रिपुटकरणादग्निसंयोगेन सुमृतं स्यात्। तस्य देवीस्वरसप्लुतस्य सुमृतसैन्धवस्य मुखाधारा स्फुटविकटकटोरिका[6] पात्री कार्या; मुखमेव आधारो यस्याः सा एवंविधा; स्फुटा प्रकटा, विकटा विपरीता[7] अधोमुखेत्यर्थः, सा कटोरिका विहिता कार्या अयःपात्रस्य । तस्याः कटोरिकाया उपरि ऊर्ध्वभागे एषा कटोरिका आदेया स्थाप्या । किंविशिष्टा? अङ्गुलोत्सेधा[8] अङ्गुल[9] उत्सेधः परिमाणं[10] यस्याः सा तथोक्ता । पुनः किंविशिष्टा? अर्धाङ्गुलनिम्ना अर्धाङ्गुलपरिमाणनिम्ना मध्यगा । पुनः किंविशिष्टा? विहितच्छिद्रत्रितया विहितानि कृतानि छिद्रत्रितयानि यस्यां सा एवंविधा; शस्ता च सन्तुलविहितछिद्रत्रितया (?) । चतुरङ्गुलोर्ध्वा[11] तदुपरिभागे[12] कटोरिका चतुरङ्गुलिप्रमाणोन्नतति भावः । पुनश्छिद्रेषु त्रिषु शलाका योज्या लोहशलाकाः[13] क्षेप्याः; पुनस्तत्रापि छिद्रेषु हेमपत्राणि कण्टकवेधीनि[14] कनकपत्राणि योज्यानीति । एवंविधे पूर्वं निर्मिते यन्त्रे[15] हेमपत्राणि स्थाप्य विधूप्यन्ते । ततोऽग्निं प्रदीपयेत् यन्त्राधस्ताद्यन्त्राधोभागे वह्निं प्रज्वालयेत्, तदा तानि हेमपत्राणि कृष्णानि श्यामवर्णानि भवन्ति । कस्मात् ? धूमोपलेपमात्रात् धूमश्चासावुपलेपश्च धूमोपलेपस्तन्मात्रात्तत्प्रमाणात् । येनोपधेन धूपो[16] निरुक्तस्ते-

---

१ ग. पुस्तके नास्ति । २ ०स्वकीयेन रसेन ग. । ३ च पुनः अहि० ग. । ४ अहिपत्र मित्यनेनात्र ससिकपत्रं ग्राह्यं तच्च शिलया मनःशिलाया विचूर्णिते पुटादिना मारिते एव धूपनार्थं प्रयोज्यम् उक्तं हि—रसरत्नसमुच्चये—गन्धालकशिलानां हि कज्जल्या वा मृताहिना । धूपनं स्वर्णपत्राणां प्रथमं परिकीर्त्तितम् ॥ तथा चान्यत्र-शिलया निहतं नागं ताप्यं वा सिन्धुना हतम् । ताभ्यां तु मारितं बीजं सूतके द्रवति क्षणात् । ५ अत्र 'शिलया' शब्देन 'मनःशिलया' इत्यर्थो भवेत् । ६ कटोरिकाश्रयः पात्रे कार्या ग । ७ विपरीतमुखेत्यर्थ ग. । ८ द्व्यङ्गुलो०ख. । ९ द्व्यङ्गुल ख. । १० कटोरिकापरि० ख. । ११ चतुरङ्गुलाया ख.ग. १२ भागं ख.ग. १३ शलाका ख. ग. । १४ कण्टकवेशितानि ग. १५ पात्रे ख. ग. । १६ धूमो ख. ।

नौषधेनोपलेपः कार्यः पत्रेष्विति। पुनः किंभूतानि हेमपत्राणि रसेन्द्रो जरति? अग्नितापितानि सन्ति वह्नियोगात्तप्तानि कृतानि। स्वर्णजारणमिदं गदितम्। इति पञ्चभिः श्लोकैः कुलकम्॥ ८—१२॥

तेनैव तारपत्रं विधिना संस्वेद्ययन्त्रयोगेन।
जायेत कृष्णवर्णं तत्तारं द्रवति गर्भे च॥ १३॥

अथ रूप्यजारणमाह—तेनेत्यादि। तेनैव विधिना पूर्वविधानेन, तारपत्रं रूप्यदलं, कृष्णवर्णं श्यामलप्रभं, जायेत। केन? संस्वेद्ययन्त्रयोगेन; संस्वेदः प्रबलाग्निस्तस्येदं सम्बन्धि यद्यन्त्रं तस्य यो योगस्तेन। तत्तारपत्रं पुनः गर्भे रसोदरे द्रवति जलत्वमाप्नोति। पुनस्तस्मिन् यन्त्रे द्रवति, चशब्दात् रसेन्द्रस्तत्पत्रं जरति तारकृष्णीति॥ १३॥

अथवा बलिना वङ्गं नागाभिधानेन[1] यन्त्रयोगेन[2]।
हेमाह्वं[3] तारं वा द्रवति च गर्भे न सन्देहः॥ १४॥

अथ योगान्तरमाह—अथवेत्यादि। अथवेति समुच्चये, एकार्थनिष्ठत्वात्। बलिना गन्धेन सह वङ्गं यन्त्रयोगेन कृष्णं जायेत। न केवलं वङ्गं पुनर्नागाभिधानेन[4] सह नागविधानमप्येवं स्यादिति व्यक्तिः। नागाभिधानेनेति[5] नागनाम्ना, "आख्याह्वे अभिधानं च नामधेयं च नाम च—"[6] इत्यमरः[7]। एवंविधं वङ्गं वा नागं वा हेमाह्वं[8] हेमपत्रं वा तारं तारपत्रं वा एतत्सर्वं बलिना कृष्णं जायेत, मृतं च सर्वं गर्भे रसान्तरे[9] द्रवति, नात्र संदेहः असंदिग्धमिदमुक्तम्[10]। चशब्दाज्जरति निःशेषत्वमाप्नोति[11]॥ १४॥

---

१ 'नागविधानेन' इति पाठान्तरम्। २ यन्त्रयोगे च ख. ग.। ३ हेम वा ख. ग.। ४ कलृतं ग.। ५ नागविधानेन ग.। ६ नागविधानेनेति ग.। ७ आख्याह्वाये च अभिधाने च नामधेयं च नामेत्यमरः ग.। ८ हेम ख. ग.। ९ रसान्तर्द्रवति ग.। १० ०मित्थमुक्तम् ग.। ११ ख. ग. पुस्तकेऽत्र "माक्षीक शुद्धवर्णदरदसहितेन यन्त्रे पूर्वोक्तानयोः पात्रे सहितं स्थापितं, तेन पुनरनेन पक्वौषधेन ताद्यपत्रं वा तारं रूप्यपत्रं कनकजारण (तारण. ग.) यन्त्रे पक्वं कुर्यात्। एतत् प (क्व) श्च गर्भे रसोदरे पततिप्राप्नोति द्रवति मिति (इति) शेषः, चशब्दग्रहणाज्जरति च" इति अधिकः पाठः दृश्यते।

रसकं बलिना युक्तं पूर्वोक्तविधानयोगेन ।
पक्वं चूर्णं यावद्द्रवति भृशं द्रवति गर्भे च ॥ १५ ॥

प्रयोगान्तरमाह—रसकमित्यादि। रसकं खर्परिकं[2], बलिना गन्धेन सह, युक्तं सत् मिलितं सत्, 'समभागेन' इति शेषः; केन कृत्वा? पूर्वोक्तविधानयोगेन; पूर्वोक्तं यद्विधानं यन्त्रादिकं तस्य योऽसौ योगस्तेन कृत्वा; तावद्भृशमत्यर्थं पक्वं कार्यं यावदशरीरतां याति; तच्चूर्णं गर्भे रसोदरे द्रवति गर्भद्रुतिर्भवति, चशब्दाज्जरति च ॥ १५ ॥

व्यूढोऽथ गन्धकाश्मा शतगुणसंख्यं तथोत्तमे हेम्नि ।
सूते च भवति पिष्टिर्द्रवति हि गर्भे न विस्मयः कार्यः ॥१६॥

विध्यन्तरमाह—व्यूढ इत्यादि । अथेत्यनन्तरम् । गन्धकाश्मा गन्धपाषाणः, शतगुणसंख्यं यथा स्यात्तथा उत्तमे हेम्नि पूर्णवर्णे व्यूढो निर्वाह्यः तद्गन्धव्यूढं हेम सूते पारदे पिष्टिर्भवति, हि निश्चितं, गर्भे रसान्तर्द्रवति, गर्भद्रुतिर्भवतीत्यत्र विस्मयो न कार्यः[11] ॥ १६ ॥

अथवा शतनिर्व्यूढं रसकवरं शुद्धहेम्नि वैरबीजम् ।

---

१ चूर्णं ग. । २ खापरिकं ग. । ३ निमित्तं ग. । ४ कृत्वा पक्वं कुर्यात् ख. ग. । ५ गर्भे द्रुतिर्भवति ग. । ६ च शब्दाद्भ्राति च ख. ग. ।

एतदनन्तरं च श्लोक एकोऽधिकः पठनीयः। यद्यपि ख. ग. पुस्तकयोरपि तत् पाठः न समुपलभ्यते परं टीकादर्शनात् मूलश्लोकः कल्पनीयः । टीका चैवमस्तिः—

शुद्धमाक्षिकचूर्णं निर्व्यूढं (ख पुस्तके नास्ति) यच्छतगुणं हेम्नि सुवर्णशतगुणं हेम्नः शतशतगुणितसमनिर्व्यूढहेमतुल्यांशं च समभागं सूततुल्यं गर्भे रसोदरे द्रवति जरति अभ्रविधानेन ( सुवर्ण इत्यारभ्य विधानेन इति पर्यन्तं ख. पुस्तके नास्ति ) समभागेन जारितो रसो मौनीति भावः । यथा च अष्टगुणं यदभ्रकबीजं षड्गुणांस्तत्र (गुणं तत्र ख.) विलीनः हेमसमे मसमं रसबन्धतरमनवदेकेन निषिद्धम् (०तरमन विस्मयः कार्यः ख.)? ॥ १६ ॥

७ व्यूढोऽष्टमगन्धाश्मा ग. । ८ पिष्टं द्र० ग. । ९ निर्वाह्यः ग. । १० रसान्तर्भवति ग. । ११ एतदनन्तरं "अवश्यं च सूचि" इत्यधिकः ग. पुस्तके । १२ करम् ग. ।

बीजं जरति रसेन्द्रे[1] द्रवति च गर्भे न सन्देहः ॥ १७ ॥

विध्यन्तरमाह—अथवेत्यादि । अथवेति समुच्चये, रसकवरं श्रेष्ठं खर्परिकं, शुद्धहेम्नि पूर्णवर्णे, शतनिर्व्यूढं कुर्यात् शतगुणनिर्वाहः कार्यः, एकगुणस्वर्णे शतगुणनिर्वाह इति युक्तं, एवं कृते सति वरबीजं श्रेष्ठबीजं भवति, तद्बीजं[2] गर्भे रसोदरे द्रवति गर्भे द्रुतिर्भवति, रसेन्द्रे पारदे, शीघ्रं अविलम्बितं, जरति च निःशेषतामाप्नोति 'विधानेन' इति शेषः; अत्र द्रवणे जरणे च न सन्देहः ॥ १७ ॥

अथवा तालकसत्वं शिलया वा तच्च हेम्नि[3] निर्व्यूढम् ।
शतगुणमथ मूषायां जरति रसेन्द्रो द्रवति गर्भे च ॥ १८ ॥

पूर्वार्धे विध्यन्तरमाह—अथवेत्यादि । तालकसत्वं हरितालसारं, शतगुणं[4] शतगुणितं,[5] हेम्नि कनके, निर्व्यूढं अन्ध[6]मूषायां वा प्रकाशमूषायां 'वह्नियोगेन[7]' इति शेषः, तालकसत्वस्य हेम्नि निर्वाहः कार्य इति व्यक्तिः; तच्च तत्सत्वं केवलं वा शिलया मनःशिलया सार्धं निर्व्यूढं कार्यं; तद्धेम गर्भे रसोदरे द्रवति, अथ रसेन्द्रो रसराजः द्रुतं जरति विधानेनेति ॥ १८ ॥

रसदरदाभ्रकताप्य[8]विमलामृतशुल्बलोहपर्पटिका ।
स्नुह्यर्कदुग्धपिष्टं कङ्कुष्ठशिलायुतं नागम् ॥ १९ ॥

अथ विध्यन्तरमाह—रसेत्यादि । रसदरदाभ्रकताप्यमिति रसः पारदः, दरदो हिंगुलः,[9] अभ्रकं प्रतीतं, ताप्यं स्वर्णमाक्षिकं,[10] विमला रूप्यमाक्षिकं, मृतं यच्छुल्बं ताम्रं लोहो मुण्डादिश्च[11] एतेषां रसादीनां[12] रसपर्पटीवत् पर्पटिका कार्या । तया युतं नागं, पुनः कंकुष्ठशिलायुतं कंकुष्ठं हरितपीतवर्णो विषहरपाषाणजातिः, शिला मनोह्वा, ताभ्यां युतं मिश्रितं यन्नागं सीसकः; स्नुह्यर्कदुग्धपिष्टं कार्यं, स्नुही सेहुण्डः,

---

१ एतदनन्तरं शीघ्रमित्यधिकः पाठः ग. पुस्तके समुपलभ्यते । २ तद्वत् बीजं ग. । ३ ग. पुस्तके नास्ति । ४ एतदनन्तरं हेम्नः इत्यधिकं पठ्यते ग. पुस्तके । ५ शतगुणितहेम्नि ग. । ६ अत्र मूषायां प्र० ग. । ७ वह्नियोगश्च ग. । ८ ताप्यं ख. ग. । ९ हिङ्गुलं ग. । १० "एतदनन्तरं एकवद्भावात् द्वन्द्वम्" इत्यधिकः पाठः ख. ग. । ११ मुण्डादि ख. ग. । १२ दरदादीनां ग. ।

अर्कः प्रसिद्धो विटपी, तयोर्दुग्धेन पिष्टं पांशुभूतं मृतं यन्नागं, कुक्कुटपुटविधानेनेति शेषः, एतदपि बीजं सिद्धं, गर्भे द्रवति च, पूर्वसंबन्धात् ॥ १९ ॥

अभ्रकतालकशङ्ख[1]रससहितं तत्पु[2]नः पुनः[3] पुटितम् ।
चिञ्चाक्षार[4]विमिश्रं वङ्गं निर्जीवतां याति ॥ २० ॥

अथ वङ्गबीजविधानमाह—अभ्रकेत्यादि । चिञ्चाक्षारविमिश्रं यद्वङ्गं[5] अम्लिकाक्षारयुक्तं वङ्गं[6], अभ्रकतालकशङ्खरससहितं अभ्रकं प्रतीतं, तालकं[7] हरितालं, शङ्खं कम्बुग्रीवं, रसः पारदः, एतैश्चतुर्भिः सहितं यथा स्यात्तथा पुनः[8] वारं वारं[9] निरुत्थं यावत् तावत्पुटितं कुर्यात् । एतदौषधस्यांशभागेन सह पुटनाद्वङ्गं निर्जीवतां याति पञ्चत्वमाप्नोति, एतदपि बीजं सिद्धं गर्भद्रावणे जारणार्थे[10] च, पूर्वसंबन्धात्[11] ॥ २० ॥

विधिनाऽनेन च पुटितं म्रियते नागं निरुत्थतां च गतम् ।
वङ्गं च सर्वकर्मसु नियुज्यते तदपि गतजीवम् ॥ २१ ॥

नागवङ्गयोरेतदौषधं[12] कारणमित्याह—विधिनेत्यादि । अनेन विधिना उक्तविधानेन, नागं सीसकं, पुटितं सत् म्रियते मृतं[13] भवतीति; वाऽमुना विधानेनैव[14] निरुत्थतां गतं अशरीरतां प्राप्तं वङ्गं सर्वकर्मसु चारण[15]जारणभक्षणादिकार्येषु नियुज्यते, रसज्ञैरिति शेषः । नागवङ्गमारणमेकविधमेवोक्त[16]मतो तद्भक्षणादिषु परस्परं गुणाधिक[17]योग्यं न तु जारणादिषु ॥ २१ ॥

मृतनागं मृतवङ्गं मृतवरशुल्वं मृतं तथा तीक्ष्णम् ।
एकैकं हेमवरे शतनिर्व्यूढं द्रवति गर्भे च ॥ २२ ॥

नागवङ्गशुल्वतीक्ष्णानां जारणविधानमाह—मृतनागमित्यादि । मृतनागमिति मृतं निर्जीवतां गतं यन्नागं सीसकं, तथाऽनेन विधानेन

---

१ शङ्ख ख. ग. । २ यत्पुनः ख. । यः पुनः ग. । ३. ग पुस्तके नास्ति । ४ क्षारैर्विमिश्रं ख. ग. । ५ यद्वा क्षार० ग. । ६ रङ्गं ग. । ७ तालं ग. । ८ ग. पुस्तके नास्ति । ९ ग. पुस्तके नास्ति । १० तारणार्थे ग. । ११ सम्बन्धात् ख. ग. । १२ औषधकारण ख. ग. । १३ मृतो ग. । १४ विधिनानेनैव ग. । १५ चारणे जारणे भ० ग. । १६ मेवोपक्रमतो ग. । १७ योज्यं ख. ग. ।

मृतं वङ्गं, तथा मृतं निरुत्थतां गतं वरशुल्वं ताम्रं, तथा च मृतं तीक्ष्णं, अरिवर्गेणेति शेषः; एषां मध्ये एकैकं नागं वा वङ्गं वा शुल्वं वा तीक्ष्णं, वा पृथक्त्वेन हेमवरे पूर्णवर्णे स्वर्णे शतनिर्व्यूढं हेम्नः शतगुणनिर्वाहितं कुर्यात्; तत्सिद्धं गर्भे रसोदरे द्रवति, चशब्दाज्जरति च ॥ २२ ॥

समगर्भे द्रुतिकरणं हेम्नो वक्ष्याम्यहं परं योगम् ।
आमकसस्यकचूर्णं शतनिर्व्यूढं महाबीजम् ॥ २३ ॥

महाबीजप्रभावं दर्शयन्नाह समगर्भ इत्यादि। इहास्मिन्शास्त्रे विधिना शास्त्रोक्तरीत्या यानि बीजान्युक्तानि तानि कर्तव्यानि सामान्येनेति भावः; परं गर्भद्रुत्यर्थं अयं वार्तिकेन्द्रो योगः वार्तासु कुशला वार्तिकाः, शास्त्रोपदेशरहिता इत्यर्थः, अत्र भावाद्यर्थे 'इक्' प्रत्ययः, तेषु वार्तिकेषु इन्द्रः प्रवरो योगः; तथानेनैव प्रकारेण एकमतश्चायं शास्त्रोपदेशिकानां शास्त्रोपदेशरहितानां च, अभिमत इत्यर्थः (?) ॥ २३ ॥

अथवा गन्धकधूमं तालकधूमं शिलाह्वरसकस्य ।
दत्त्वाऽधोभागमुखीं दीर्घतमां खर्परस्यार्धे ॥ २४ ॥
ऊर्ध्वं लग्ना पिष्टी सुदृढा च यथा तथा च कर्तव्या ।
दत्त्वा खर्परपृष्ठे दैत्येन्द्रं दाहयेत्तदनु ॥ २५ ॥
स्तोकं स्तोकं दत्त्वा कर्षाग्नौ ध्मापयेन्मृदा लिप्ताम् ।
गर्भे द्रवति हि बीजं म्रियते च तथाधिके दाहे ॥ २६ ॥

रसोदरे बीजद्रावणविधानमाह—अथवेत्यादि । अथवेति समुच्चये ऊर्ध्वं दीर्घतममूषायन्त्रस्य तलभागे, पिष्टी रसेन्द्रबीजयोर्निर्मिता पिष्टिका, च पुनः सुदृढा यथा स्यात्तथा लग्ना कर्तव्या। किं कृत्वा? खर्परस्यार्धे मृन्मयपात्रस्य खण्डार्धे खण्डैकदेश इत्यर्थः, दीर्घतमां, अधोभागमुखीं अधोभागे मुखं यस्याः सा तथोक्ता तां दत्त्वा । पुनः किं कृत्वा? गन्धकधूमं दत्त्वा, वा स्तोकं अल्पमल्पं तालकधूमं दत्त्वा, वा शिलाह्वरसकस्य शिलाह्वा मनःशिला, रसकः खर्परः, एकवद्भाव-

१एतदनन्तरं "तारे शतगुणं वङ्गं निर्व्यूढं तारबीजम्" इत्यधिकः पाठः ख.ग.। २ वार्ता कुशला ख.ग.। ३वार्तिकेन्द्रेषु ग.।४ ०धोमुखमूषीं ख.ग.।५ ऊर्ध्वं ख ग. । ६ दाहः ख. ग । ७ अथेति ग. । ८ दीर्घतमा मूषायन्त्र० ग. । ९ एतदनन्तरं 'आसित्वा' इत्यधिकं पठ्यते ख. ग. । १० खंडस्यार्धे ख. । ११ दीर्घतमामित्यर्थः ग. । एतदनन्तरं च 'दीर्घां अधोमुखमूषां' इति ग. पुस्तके पठ्यते । ख. पुस्तके तु 'अधोमुखमुखीं' इति । १२ गन्धकं मन्दं ख ग. । १३ शिलाह्वार० ग. ।

समासः, तस्य धूमं दत्त्वा । पुनस्तत्खर्परं अधोमुखमुखां च मृदा लिप्तां मृद्वेष्टितां करीषाग्नौ ध्मापयेत्, करीषवह्नावित्यर्थः । एवं अधोमुखां खर्परं च दत्त्वा दैत्येन्द्रं बलिनामानं प्रस्तावाद्गन्धकं तदनु तत्करणपश्चाद्दाहयेत् । एवं कृते सति रसेन्द्रमिलितं यद्बीजं तद्गर्भे रसेन्द्रान्तर्द्रवति । पुनर्बीजसहितो रसेन्द्रो आधिके दाहे सति म्रियते इत्यर्थः । श्लोकत्रयसंबन्धाद्विशेषकम् ॥ २४–२६ ॥

गन्धकतालकशैलाः सौवीरकरसकगैरिकं दरदम् ।

क्षाराम्ललवणानि बिडो माक्षिकवैक्रान्तविमलसमभागैः ॥२७॥

अथ सुवर्णजारणार्थं बिडमाह—गन्धकेत्यादि । गन्धकतालकशैला इति गन्धकं प्रतीतं, तालकं हरितालं, शैलः शिलाजतुः, द्वन्द्वः समासः, तेन तथोक्ताः समभागाः कार्याः । पुनः सौवीरकं शुक्लाञ्जनं, रसकं खर्परिकं, गैरिकं धातुगैरिकं, दरदं हिङ्गुलं, अत्रैकवद्भावसमासः, तत्तथोक्तं समभागं कार्यम् । पुनः क्षाराम्ललवणानि क्षारा यवक्षारादयः, अम्लं जम्बीरादि, लवणानि सैन्धवादीनि, एतान्यपि समभागानि । कैः सह ? माक्षिकवैक्रान्तविमलसमभागैः सह; माक्षिकं स्वर्णमाक्षिकं, वैक्रान्तं वज्रभूमिजं रजः, विमलं रुक्ममाक्षिकं, एतानि समभागानि, तैर्बिड उच्यते; सर्वैः समभागैः सुमर्दितैर्बिडः कार्य इत्यर्थः ॥ २७ ॥

कृत्वा सुवर्णपिष्टिं मृदितां च सुवेष्टितामनेनैव ।

त्रिपुटैस्तप्ते खल्वे मृदिता गर्भे तथा द्रवति ॥ २८ ॥

बिडयोगाद्यथा बीजं गर्भे द्रवति तथाह—कृत्वेत्यादि । पूर्वोक्ता या पिष्टी, तामनेनैवोक्तबिडयोगेन, तप्ते खल्वे तप्तसंबन्धाल्लोहमये, त्रिपुटैः करीषाग्न्यात्मकैर्मृदिता घर्षिता सति अनेनैव च वेष्टिता कार्या । किं कृत्वा ? सुवर्णपिष्टीं कनकपिष्टीं वा अन्यस्यापि धातोः सुवर्णपिष्टीं शोभनवर्णां पिष्टीं कृत्वा । खल्वे मृदिता सती, तथा तेनैव प्रकारेण

१ तस्याः ग. । २ अधोमुखमूषामुखं वा ख. ग. । ३ मूषां ख. ग. । ४ प्रस्तावनात् ग. । ५ तत्करणं ग. । ६ रसेन्द्रं मिलितं ग. । ७ "०त्कुलकम्" ख. ग. । ८ "गन्धता०" ख. । ९ क्षाराम्लपट्टानि इति केचित्, । तथा टीकायामपि । १० अम्लो जम्बीरादिः ग. । ११ स च ख. ग. । १२ तत्त्रिपुटै ख. ग. १३ अनेनैवोक्त ख.ग. । १४ तत्त्रिपुटैः ख. ग. । १५ ख. पुस्तके नास्ति ।

न त्वन्यप्रकारेण, गर्भे रसोदरे, द्रवति सलिलरूपा तिष्ठति ॥ २८ ॥

रक्ते शतनिर्व्यूढं नेत्रहितं भस्म वैक्रान्तकं चाथ ।
विमलं शतनिर्व्यूढं ग्रसति समं द्रवति गर्भे च ॥ २६ ॥

अथ वैक्रान्तगर्भद्रुतिमाह—रक्त इत्यादि । वैक्रान्तभस्म वैक्रान्तं वज्रभूमिजं रजः, तदुद्भवं भस्म; रक्ते रक्तगणे, शतनिर्व्यूढं शतवारं निर्वाहितं कुर्यात् । किंविशिष्टं? नेत्रहितं; नेत्रहितशब्देन मणित्वं दर्शितं, मणयो नेत्रहिता इति[1] । विमलं रूप्यमाक्षिकं श्वेतवर्णं यन्माक्षिकं, रक्तगणे शतनिर्व्यूढं कुर्यात् । तदुभयं वैक्रान्तं विमलं च रक्तशतनिर्व्यूढं सत् रसो ग्रासविधानं विहाय समं ग्रसति कवलयति; पुनस्तद्ग्रसितं गर्भे रसान्तर्द्रवति, जरति च इति चशब्दार्थः ॥ २६ ॥

ये केचिद्बिडयोगा क्षाराम्ललवणानि दीप्तवर्गाश्च ।
सर्वे शतनिर्व्यूढा गर्भद्रुतिकारकाः कथिताः ॥ ३० ॥

रक्तगणाधिक्यं दर्शयन्नाह—य इत्यादि । य केचिद्बिडयोगा अत्र[2] ग्रन्थान्तरेष्वपि च[3] कथिताः; तथा क्षाराम्ललवणानि कथितानि क्षारा यवक्षारादयः, अथ च वृक्षौषधिसमुद्भवाः, अम्ला जम्बीरादयः अम्लवृक्षशाकसमुद्भवाश्च[4] यान्येतानि कथितानि, च पुनर्ये दीप्तिकरा योगा अभिहिताः, ते सर्वे बिडक्षाराम्ललवणदीप्तवर्गाः शतनिर्व्यूढाः गर्भद्रुतिकारकाः[5] गर्भे रसोदरे द्रुतं द्रवरूपं धातुमणिरत्नादीनीति शेषः ॥ ३० ॥

शतनिर्व्यूढे च समं पादोनं[6] पञ्चसप्ततिर्व्यूढे ।
पञ्चाशति[7] तदर्धं पादः स्यात्पञ्चविंशतिके ॥ ३१ ॥

शतनिर्वाहितादौ समादिविधानमाह[8]—शतेत्यादि । शतनिर्व्यूढ इति शतवारं निर्वाहिते 'रक्तगणे' इति शेषः, समं तुल्यं ग्रसति 'रस' इति शेषः[9][10] । पुनः पञ्चसप्ततिर्व्यूढे[11] सति पादोनं चतुर्थांशवर्जितं समग्रं ग्रसतीति । पुनः पञ्चाशन्निर्व्यूढे सति तदर्धं समस्यार्धमिति । पुनः पञ्चविंशतिके सति पादश्चतुर्थांशम् । न्यूनाधिके निर्व्यूढे सति न्यूनाधिकांशो ज्ञेय इति विशेषार्थः ॥ ३१ ॥

१ इति वा ख.ग.। २ अत्र च.ग.। ३ग. पुस्तके नास्ति। ४समुद्भवानि च ख.ग.। ५ समगर्भद्रुतिकारकाः ख.ग.। ६ पादोनपञ्चसप्ततनिर्व्यूढे ख.ग.। ७ पञ्चाशत्तु ख. ग.। पञ्चाशति च इति क्वचित्। ८ समादिविभागमाह ख.ग.। ९ चैकवारं ग.। १० ग.पुस्तके नास्ति। ११सप्ततिर्व्यूढे ख.ग.।

अष्टांशं तु तदर्धे षोडशांशं तदर्धनिर्व्यूढे ।

तस्यार्धे द्वात्रिंशच्चतुःषष्ट्यंशं तदर्धनिर्व्यूढे ॥ ३२ ॥

अल्पनिर्व्यूढक्रममाह - अष्टांशमित्यादि । तु पुनस्तदर्धे सार्धद्वादशके निर्व्यूढे सति अष्टांशं, तदर्धे षड्वारनिर्व्यूढे सति षोडशांशमिति, पुनस्तस्यार्धे त्रिवारनिर्व्यूढे सति द्वात्रिंशदंशं तदर्धनिर्व्यूढे सति चतुःषष्ट्यंशं रसो ग्रसतीत्यर्थः ॥ ३२ ॥

इति गदितां गर्भद्रुतिमभिषवयोगेन चाम्लवर्गेण ।

स्वेदनविधिना ज्ञात्वा मृदितां तप्ते तु खल्वतले ॥ ३३ ॥

गर्भद्रुतौ सत्यां कर्तव्यमाह—इतीत्यादि । इत्युक्तविधानेन, गदितां कथितां गर्भद्रुतिं ज्ञात्वा, तप्ते खल्वतले लोहमये करीषाग्निना उष्णतां नीते मृदितां कुर्यात् । केन ? अभिषवयोगेन अभिषवः संमर्दनं तस्य योगेन, न केवलमनेन अम्लवर्गेण च जम्बीरादिना, न केवलमनेनापि स्वेदनविधिना च स्वेदनविधिः स्वेदनसंस्कारोक्तत्वान्नात्राभिहितः जारणहेतोरिति शेषः ॥ ३३ ॥

ज्ञात्वा बीजबलाबलमर्दनयोगं कृतं च रसराजे ।

स्वेदविधानं च पुटं यन्त्रं वा विहितरसकर्म ॥ ३४ ॥

मर्दनस्वेदनयोः पूर्वोपकरणं दर्शयन्नाह—ज्ञात्वेत्यादि । बीजबलाबलमर्दनयोगं कृतं ज्ञात्वा बीजानां धातूपधातुयोगजनितानां बलाबले न्यूनाधिके योऽसौ मर्दनयोगस्तमेव कृतं ज्ञात्वा विदित्वा रसराजे स्वेदविधानं कुर्यात्, वा पुटं वह्नियोगं कुर्यात्, वा यन्त्रं विहितरसकर्म कुर्यात् विहितं कृतं रसस्य कर्म संस्काररूपं यत्र तथोक्तं, गर्भयन्त्रादिकमित्यर्थः ॥ ३४ ॥

सूतवरं लक्षयते बीजं नोपेक्षतां यथा याति ।

तद्वत्कार्यं विधिना सुकर्म गुरुपादनिर्दिष्टम् ॥ ३५ ॥

सूतकर्मणो दुर्बोधत्वाद् गुरुपादं स्तुवन्नाह—सूतेत्यादि । यथा

---

१ अम्ल० ग. । २ ०स्तदर्धे ग. । ३ "अष्टांशमित्यारभ्य सति" इति पर्यन्तं ग. पुस्तके नास्ति । ४ तदर्धे निर्व्यूढे ग. । ५ स निर्व्यूढो दि समग्रासो रोरैकामित्यर्थः (?) ग. । ६ तप्ते खल्वे, तप्तसम्बन्धात् लोह० ग. । तप्ते खल्वतले सम्बन्धात् ख. । ७ नीते तप्ते ख. ग. । ८ तेन ग. । ९ ग. पुस्तके नास्ति । १० तत्तथोक्तं ख. । ११ सूतकर्मणि नाधिगम्य (म. ग.) त्वा. ख.

येन प्रकारेण सूतवरं पारदः लक्षयते ज्ञायते कर्मकृतेति शेषः; पुनर्यथा बीजं उपलक्षतां न याति सम्यक् मिलति[2], तद्वत्तेनैव प्रकारेण गुरुपाद-निर्दिष्टं कर्म आचार्यवर्यदर्शितं पूज्यं संस्काररूपं, विधिना आचार्यो-क्तविधानेन कुर्यात् । गुरुपादलक्षणम्, "सर्वशास्त्रविशेषज्ञः कुशलो रसकर्मणि । एवंलक्षणसंयुक्तो रसविद्यागुरुर्भवेत्—" इति गर्भद्रुतिजारणप्रकरणम्[3] ॥ ३५ ॥

बाह्यद्रुतिरतिविमला स्फुरति हि केषांचिदेव सिद्धानाम् ।
तेभ्यः सम्यक् ज्ञात्वा कलनाः कार्यास्तथा द्रुतयः ॥ ३६ ॥

बाह्यद्रुतिं प्रशंसन्नाह[4]—बाह्यद्रुतिरित्यादि । द्रुतिर्द्विधोक्ता—गर्भद्रुति-र्बाह्यद्रुतिश्चेति । गर्भद्रुतिः पूर्वमुक्ता, बाह्यद्रुतिरधुनाऽभिधीयते[5] । किं-विशिष्टा ? अतिविमला निर्मलतरा । एषा च पुनः केषांचिदेव[6] सिद्धा-नां स्फुरति, सिद्धा रसविद्यापारगा नित्यनाथादयः तेषां, ते जानन्ती-ति[7] । दुष्प्राप्यत्वात् बाह्यद्रुतिरिह विरला[8] । तेभ्यः सम्यक् ज्ञात्वा, तथा तेनैव सिद्धोद्देशविधानेन[9], द्रुतयो बाह्यद्रुतयः कार्याः ॥ ३६ ॥

वरनागं[10] रसराजं बीजवरं[11] सारितं तथा त्रितयम् ।
गन्धकशिलालसहितं निर्नागं दीपवर्तितो भवति ॥ ३७ ॥
बद्ध्वा सुदृढ वस्त्रे पोटलिकायां शिखीकृतो[12] दीपः
तैले मग्नं कृत्वा निर्नागं जायते क्षिप्रम् ॥ ३८ ॥

अथ नागजारणमाह—वरनागमित्यादि । वरनागं श्रेष्ठजाति सीसकं जारणयोग्यं[13], रसराजं उक्तसंस्कारैः संस्कृतं[14] पारदं, बीजवरं हेमबीजं, एतत्त्रयं[15] सारितं मिलितं कार्यं; पुनर्गन्धकशिलालसहितं गन्धकं

१ पारदश्चैवं ख. ग. । २ मिलति रसे ख. ग. । ३ गर्भद्रुतिजारणा० ख. ग. । ४ प्रशंसयन्नाह ग. । ५ विधीयते ग. । ६ केषां स्फुरति कं जानन्तीति तदेषां सिद्धानां स्फुरति, देवाः स्वर्वैद्यादयः सिद्धा० ख.ग. । ७ग. पुस्तके नास्ति । ८विरला पाठः इहास्मिन् ज्ञात्वा ग. । ९ देवसिद्धो-पदेशविधानेन ग. । १० वरनागलक्षणं यथा—तीक्ष्णं नीलाञ्जनोपेतं ध्मातं हि बहुशो दृढम् । मृदु कृष्णं द्रुतद्रावं वरनागं तदुच्यते ॥ ११ बीज-वरे ख. । १२ शिखाकृतो ख. ग. । १३ चारणयोग्यं ग. । १४ सूतं ग. । १५ पत्रत्रयं ग. ।

प्रतीतं, शिला मनःशिला, आलं हरितालं, द्वन्द्वस्तानि, तैः सहितं च कार्यं, एतत्सर्वषटकं दीपवर्तितः प्रज्वालितदीपवर्तियोगात् निर्नागं नागवर्जितं भवति नागं जरतीत्यर्थः । यथा निर्णागं स्यात्तथा विधानमाह—बद्ध्वेत्यादि । तत्पूर्वोक्तं षट्कं सुदृढे वस्त्रे नूतने वस्त्रे, अत्रौपश्लेषिकेऽधिकरणे सप्तमी, पोटलिकायां बद्ध्वा, पुनस्तैले तिलोद्भवे तत्षट्कं मग्नं निमज्जितं कृत्वा तदधः शीखीकृतो दीपोऽवधार्यः, न शिखी शिखायुक्तः कृतः शिखीकृतः शिखावानित्यर्थः । अनेन विधिना क्षिप्रं शीघ्रं निर्नागं स्यादिति युग्मम् ॥३७॥३८॥

कृत्वाऽत्र दीर्घमूषां सुदृढां ध्मातं तु भस्मगर्तायाम् ।
क्षिप्त्वा शिलालचूर्णं पश्चात्सूतं ततः शिलाचूर्णम् ॥ ३९ ॥
संस्थाप्य भस्मनातो ध्मातं स्यात्स्वाङ्गशीतलं यावत् ।
आकृष्य तत्र सूतं ज्ञात्वा नागं सुभक्षितं सकलम् ॥ ४० ॥

निर्नागकरणे विधानमाह—कृत्वेत्यादि । तु पुनः । दीर्घां गोस्तनाकारां, सुदृढां निर्व्रणवज्रोपमां मूषां कृत्वा, तां मूषां प्रति शिलालचूर्णं क्षिप्त्वा शिला मनोह्वा, आलं हरितालं, एतयोश्चूर्णं, पश्चात्सूतं पूर्वोक्तं पारदं क्षिप्त्वा; ततोऽनन्तरं शिलाचूर्णं क्षिप्त्वा, तामेव रस संयुतां मूषां भस्मगर्तायां भस्मना युक्ता या गर्ता तस्यां ध्मातं कुर्यात्, पुनस्तावद्भस्मना आच्छाद्य यावत्स्वाङ्गशीतलं स्वयमेव शीतलं स्यात् । तत्र तस्यां मूषायां सकलं समस्तं नागं सुभक्षितं जीर्णतां गतं ज्ञात्वा सूतं आकृष्य उद्धार्य, निर्नागकरणविधानमेतत् ॥ ३९ ॥ ४० ॥

ज्ञात्वा नागं त्रुटितं पुनरपि दद्याद्यथा भवेत्त्रिगुणम् ।
पश्चाच्छुद्धं कृत्वा बीजवरं योजयेत्तदनु ॥ ४१ ॥

निर्नागानन्तरं यत्कर्तव्यं तदाह—ज्ञात्वेत्यादि । नागं सीसकं त्रुटितं बद्ध्वा पुनरपि नागं दद्यात्, 'पूर्वोक्तविधानेन पारदे' इति शेषः । यथा नागं त्रिगुणितं भवेत्तथैव कुर्यात् । पश्चात्सूतं शुद्धं

१ दीपवर्तिप्रज्वलितयोगात् एतत्षट्कं निर्णागं ग. । २ निर्नागं ख. ग. । ३ मग्नं कृत्वा पुटितं, ख. । सप्तं (तप्तं) कृत्वा पुटितं, ग. । ४ शिखाकृतो ख. ग. । ५ निर्णागं ग. । ६ पश्चात्सूतस्तथा ग. । ७ विधानान्तरमाह ख. ग. । ८ क्षिप्त्वा च ग. । ९ दद्यात् ख. ग । १० तथा ग. । ११ त्रिगुणितं त्रुटितं भवेत् ख.ग. ।

कृत्वा पारदं निर्नागं विधाय, तदनु नागजारणानन्तरं बीजवरं पूर्वोक्तं योजयेत् ॥ ४१ ॥

अथवा तारं वङ्गं सूतं संसार्य वङ्गपरिहीनम् ।
तालकयोगेन तथा निर्वङ्गं यन्त्रयोगेन ॥ ४२ ॥

अथ तारयोगमाह—अथवेत्यादि । अथवेति विधानान्तरम् । तारं वङ्गं सूतमिति तारं रूप्यं, वङ्गं खुरकं, सूतं संस्कृतपारदं, एतत्त्रितयं संसार्य मेलनं विधाय, वङ्गपरिहीनं[1] कुर्यात्; तथा तेनैव विधानेन तालस्य योऽसौ योगस्तेन, यन्त्रयोगेन च दीर्घमूषायोगेन च निर्वङ्गं वङ्गविवर्जितं कुर्यात् ॥ ४२ ॥

अथवा वस्त्रनिबद्धं गिरिजतुसहितं सुवेष्टितं माषैः ।
पक्कं तैले वटकं निर्वङ्गं जायते नूनम् ॥ ४३ ॥

विध्यन्तरमाह—अथवेत्यादि । अथवा तारं वङ्गं वटकाकारं तैले तिलोद्भवे पक्कं कुर्यात्, नूनं निश्चितं, तद्वटकं तथा पक्कं कुर्याद्यथा निर्वङ्गं जायते 'वह्नियोगेन' इति शेषः ॥ ४३ ॥

पिष्टीस्तम्भं कृत्वा बीजवरेणैव सारितं तदनु ।
अथवा बद्धरसेन तु सहितं बीजं सुरञ्जितं कृत्वा ॥ ४४ ॥

विधानान्तरमाह—पिष्टीत्यादि । [2]बीजवरेणैव पूर्वकनकबीजेनैव, सारितं मिलितं सत्, पिष्टीस्तम्भं खोटस्तम्भं कृत्वा तदनु तत्पश्चात्, अथवेति प्रकारान्तरं दर्शयति, तु पुनः, बद्धरसेन खोटबद्धरसेन सहितं, सुरञ्जितं शोभनविधानेन[3] वर्णवृद्धीकृतं, बीजं स्वर्णबीजं संयुतं कुर्यात् योग एव कार्य इति द्विविधानमुक्तम् ॥ ४४ ॥

गन्धकनिहितं सूतं निहितानिहितं च[5] शृङ्खलायां तत् ।
योजितनिर्व्यूढरसे गर्भद्रुतिकारकं नूनम् ॥ ४५ ॥

अन्यच्चाह—गन्धकेत्यादि । गन्धकनिहितं[4] गन्धके निहितं स्थापितं सूतं ऊर्ध्वाधो गन्धकं दत्त्वा सूतं मध्यस्थं कुर्यादित्यर्थः । च पुनरेवंविधं सूतं, शृङ्खलायां शृङ्खलीकरणयोगे, निहितानिहितं यन्त्रि

---

१ वङ्गं परिहितं ग. । २ पूर्वं बीजवरेणैव कनकबीजेनैव ख. ग. । ३ तद्विधान० ख. । ४ ख. ग. पुस्तके नास्ति । ५ निहितं च ग. ।

हितं तदनिहित[1]मजारितं कार्यं, निहितानिहितसंयोगात् शृङ्खलेयं, नूनं निश्चितं, योजितनिर्व्यूढरसे पूर्वं योजितं पश्चान्निर्वाहितं निर्व्यूढं यत्र[2] तत्तस्मिन्नेवंविधरसे, गर्भद्रुति[3]: पारदस्योदरे बीजानि[4] द्रवन्तीति ॥४५॥

सूतकभस्म[5]वरेण तु बीजं कृत्वा रसेन्द्रके गर्भे ।
मृदिता पिष्टी[6]विधिना ह्यभिषवयोगाद् द्रवति[7] गर्भे च ॥ ४६ ॥

पिष्टीविधिना जारणमाह—सूतकेत्यादि । तु पुनः, रसेन्द्रके[8] गर्भे रसेन्द्रकृतो योऽसौ गर्भस्तस्मिन्, बीजं कृत्वा विधिना पिष्टी-विधेया, सा पिष्टी मृदिता कार्या; कस्मात्? अभिषवयोगात् संमर्दन-योगात्; केन सह? सूतकभस्मवरेण सह सूतकस्य यद्भस्मवरं तेन, सा पिष्टी गर्भे द्रवति, चशब्दाज्जरति च[9] ॥ ४६ ॥

पत्राभ्रकं च सत्वं काँची[10] वा कान्तमाक्षिकं पुटितम् ।
निर्गुण्डीगृहकन्याचाङ्गेरीपलाशशाकैश्च ॥ ४७ ॥
तावत्पुटितं कृत्वा यावत्सिन्दूरसप्रभं भवति ।
तत्पादशेषलवणं हण्डि[11]कपाकेन पाचितं सुदृढम् ॥ ४८ ॥
एकैकं *शतव्यूढं बीजवरं जारयेद्रसेन्द्रस्य ।
गर्भे द्रवति च† क्षिप्रं ह्यभिषवयोगेन मृदितमङ्गुल्या ॥ ४९ ॥

बीजवरविधानमाह-पत्राभ्रकमित्यादि । पत्राभ्रकमिति अभ्रकस्य पत्राणि, वाऽभ्रकस्य सत्वं, पुनः काँची[12] सौराष्ट्री,कान्तमाक्षिकं कान्त[13]-श्चुम्बकः, माक्षिकं स्वर्णमाक्षिकं एतेषां[14] द्वन्द्व एकत्वं[15]; पुनरेतत् निर्गु-ण्डीगृहकन्याचाङ्गेरीपलाशशाकैः पुटितं[16] निर्गुण्डी सेफालिका, गृह-कन्या कुमारी, चाङ्गेरी अम्लशाकः, पलाशो ब्रह्मवृक्षः, शाको वृक्ष-विशेषः, एतेषां[17] द्वन्द्वसमासः; एतेषां रसं गृहीत्वा पूर्वौषध[18]पुटितं कुर्यात्

१तदनिहितं यज्जारितं ग.। २ यन्त्रनं ग.। ३ गर्भे द्रुत ग.।४बीजानि द्रवतीति ग.। ५ ख. पुस्तके नास्ति। ६ पिष्टिर्विधि ना ग.। ७ द्रवन्ति ग.। ८ रसेन्द्रकृते गर्भे ख. ग.। ९ ग. पुस्तके नास्ति। १० कांची ख. ग.। ११ हण्डिकया पाकेन ख. ग.।

१२ काञ्ची कासीसं ख.ग.। १३ कान्तं चुम्बकं ग.। १४ ग. पुस्तके नास्ति। १५ एकवत्वं ग.। १६ पुटितं तुषात्,ख. ग.। १७ ग. पुस्तके नास्ति। १८ पूर्वोक्तौषध० ख. ग.। पूर्वौषधं इति केचित्।

* "निर्व्यूढं" इति केचिदिच्छन्ति तथा टीकायामपि। † च इति केचिन्न पठन्ति

'घर्मे' इति शेषः । तदौषधं[1] पुटितं कृत्वा पुनस्तत्पुटितमौषधं तत्पादशेषं च चतुर्थांशं, लवणं सैन्धवं दत्त्वा, हरिण्डकापाकेन हरिण्डकायां मृद्भाजने यो पाकस्तेन[2] पाचितं वह्नौ पुटितं तावत्कुर्याद्यावत्सिन्दूरसंप्रभं सिन्दूरतुल्यवर्णं भवति । कथं पाचितं कुर्यात् सुदृढं यथा स्यात्तथा[3]। एकैकं शतव्यूढमिति । पूर्वोक्तानां सिन्दूरीकृतानामुपरसानामभ्रात् एकैकं एकं एकं पृथक्त्वेन शतव्यूढं शतवारं[4] वाहितं बीजवरं जायते, 'कनके' इति शेषः; तद्बीजं रसेन्द्रस्य गर्भे द्रवति, चशब्दात् क्षिप्रं शीघ्रं जरति च । कथं ? अङ्गुल्या अनामिकया यो अभिषवयोगः संमर्दनयोगस्तेनेति विशेषकर्म[5] ॥ ४७—४६ ॥

आवृत्ते[6]ऽप्यावर्त्य[7] हेमवरे क्षेप्यमुज्ज्वले[8] नागम् ।
त्रिगुणशिलाप्रतिवापं ह्यहिबीजं तत्समुद्दिष्टम्* ॥ ५० ॥

नागेन बीजकरणमाह-उज्ज्वलहेमवरे स्वर्णश्रेष्ठे, आवर्त्ये[9] सम्यग्द्रुते,[10]नागं शुद्धसीसकं, आवर्त्य[11] प्रद्राव्यं, किं कृत्वा? समं स्वर्णसमभागक्षेपं क्षिप्त्वा, पुनर्नागोपरि त्रिगुणशिलाप्रतिवापं त्रिगुणा[12] या शिला तस्या निर्वापं कुर्यात् । शिला[13] मनःशिला । तत्सिद्धं अहिबीजं[14] नागयोगेन बीजं समुद्दिष्टं, 'रसविद्धिः' इति शेषः ॥ ५० ॥

वङ्गं तु तेन विधिना हेमवरे क्षेप्यं[15] तालवापेन ।
तारे वा निर्व्यूढं बीजवरं त्रुटितसंयोगात्† ॥ ५१ ॥

---

१ तावदादौ तदौषधं ख. ग. । २ हरिण्डकायां पाकेन ग. । ३ त्तथा-हवाग्निनेत्यर्थः ग. । ४ वाहितं शतवारं ख. । वाहितशतवारं ग. । "शतवारं" इति शेषः इति केचित् । ५ कुलकम् ख. ग. । ६ आवर्ते ख. ग. । ७ ०ऽप्यावर्त्य ख. । ८ मुज्ज्वलं ग. । ९ आवर्ते ख. । १०निर्मलं नाग ख. ग. । ११ आवर्त्ये प्रद्राव्यं ग. । आवर्ते प्रदातव्यम् ख. । १२ नागात्त्रिगुणा ग. । १३ मनःशिला निक्षेप्येति ख.ग. । १४ अयं बीजं ग. । १५ क्षिप्त ग. ।

* अन्यत्राप्युक्तं सिद्धान्तरूपेण:—कुनटीहतकरिणा वा रविणा वा ताप्यगन्धकहतेन । दरदनिहतासिना वा निर्व्यूढं हेम तद्बीजम् । अत्र कुनटी मनः शिला । करिर्नागः सीसकमित्यर्थः ।

† उक्तं च-सत्त्वं तालोद्भवं वङ्गं समं कृत्वा तु धामयेत् । तच्चूर्णं वाहयेत्तारे गुणान् यावत्तु षोडश । प्रतिबीजमिदं श्रेष्ठं सूतकस्य तु बन्धनम् । इत्यादि ।

अथ वङ्गयोगेन बीजमाह—वङ्गमित्यादि । तेन पूर्वोक्तेन, विधिना विधानेन, तु पुनः, हेमवरे पूर्ववर्णिते, वङ्गं क्षेप्य, तालवापेन हरितालनिक्षेपेण निर्व्यूढं कुर्यात्, वा तारे आवर्त्य वङ्गं निक्षिप्य निर्व्यूढं निर्वाहितं सद्बीजवरं भवेत् । कस्मात् ? त्रुटितसंयोगात् त्रुटितं भवति तथा बीजवरमिति वङ्गबीजं, तत् पूर्ववत् द्रवति जरति च ॥ ५१ ॥

यो निःसृतो भुजङ्गाद्रसकेशरीवज्रपञ्जरः स पुनः ।

फणिहेमगुणात्कुटिलो रसाङ्कुशो नाम विख्यातः ॥ ५२ ॥

सुवर्णाभिधानबीजप्रशंसनमाह—य इत्यादि । भुजङ्गात् सीसकात् निःसृतः भुजङ्गशिलावापेन क्षयं नीत्वा यः पृथग्भूतः; स रसकेसरीवज्रपञ्जरः कथितः रस एव केसरी सिंहः; तदर्थं वज्रपञ्जरः वज्रेण व्यथितः पञ्जरोऽतिदृढत्वात्, सिंहरक्षणसमर्थ इत्यर्थः । पुनर्विशेषेणोच्यते- अयं वज्रपञ्जरो न किंतु अयं रसांकुशः रसो गजरूपः तस्यांकुशः वशीकरणसमर्थः । नाम संभावनायाम् । विख्यातः प्रकथितः । कस्मात् ? कुटिलात् किमपि वस्तुहरणात्, कुटिलो वक्रो भवति दुष्टस्वभाव एव, अनेन हेम्ना नागहरणं कृतम् । कथंभूतात् कुटिलात् ? फणी भुजङ्गः, हेम स्वर्णं, तयोर्गुणा विद्यन्ते यस्मिन् एवंविधात्; कुटिलादेशो युक्तः अङ्कुशोऽपि वक्रो भवतीति । अत्र भ्रान्तिमानलङ्कारः हेमबीजे वज्रपञ्जरगजांकुशदर्शनाद्भ्रान्तिर्जातेति॥५२॥

एवं पक्वं विधिना बीजवरं सूतराट् तथाम्लेन ।

कर्तव्यः संस्वेद्यो यावत्पिष्टी भवेच्छ्लक्ष्णा ॥ ५३ ॥

बीजस्यास्य पिष्टीकरणमाह - एवमित्यादि । एवं अमुना प्रकारेण, विधिनार्थादुपदेशेन, पक्वं यद्बीजवरं, तथा पूर्वसंस्कृतः सूतराट् पारदः, अम्लेन जम्बीरादिना संस्वेद्यः स्वेदाख्यो विधिः कर्तव्यः । अत्र

---

१ पूर्ववर्णे ख. । पूर्णवर्णे ग. । २ तालकवापेन ख. ग. । ३ आवर्तं ख. । ४ तृटितसंयोगात् तृटितं ग. ।

५ अथ बीजप्रशंसन० ख. ग. । ६ सुवर्णेऽभिधाने भुजङ्गात् ग. । ७ व्यथितः ख. । ८ "०पञ्जरो नाम यं रसाङ्कुशं वा, रसो०" ख. ग । ९ प्रथितः ख.ग.। १० कुटिलदंशो ग.। ११ पुनः सत्यं ज्ञायमन्यःभ्रान्ति० ग. । १२ बीजस्यापि ख. ग. । १३ विधिना कर्तव्यार्थोपदेशेन ख. ग. । १४ स्वेद्यः स्वेदस्यायं विधिः ग. ।

किमावधिस्तत्कर्तव्यो ? यावत् श्लक्ष्णा स्पष्टा पिष्टी एकशरीरता भवेत्, रसबीजयोरिति शेषः ॥ ५३ ॥

तैलेन तेन विधिना स्विन्ना पिष्टी भवेदखिलम् ।

अथवा श्लक्ष्णं शिलया निघृष्टबीजं भवेत्पिण्डी[1] ॥ ५४ ॥

विध्यन्तरमाह—तैलेनेत्यादिना । तेन पूर्वोक्तेन, विधिना वधविधानेन, तिलतैलेन स्विन्ना स्वेदिता सती पिष्टिर्भवति, वह्नाविति शेषः । अथवेति[2] विधानान्तरं दर्शयति । शिलया दृषन्मय्या, निघृष्टबीजं निघृष्टं घर्षितं यद्बीजं नागाख्यं तत्, सूतेनेति शेषः; अखिलं समस्तं यथा स्यात्तथा पिष्टिर्भवतीति[3] ॥ ५४ ॥

पाको[4] वटकविधिना[5] कर्तव्यस्तैलयोगेन[6] ।

कामणपिण्डे क्षिप्त्वा माषैश्च[7] स्यात्सुदृढपिण्डत्वम्[8] ॥ ५५ ॥

यथा वटकः पाच्यस्तथाह—पाक इत्यादि । वटकविधिना[9] माषवटकविधिना, तैलयोगेन पाकः कर्तव्यः वह्नौ पाचनं विधेयमित्यर्थः । किं कृत्वा ? कामणपिण्डे क्षिप्त्वा विडपिण्डमध्ये स्थाप्य, च पुनर्माषैरन्नविशेषैर्दृढपिण्डत्वं स्यात् माषचूर्णवेष्टितं कामणपिण्डं दृढं भवेदिति व्यक्तिः ॥ ५५ ॥

मृद्वग्निना सुपक्वं दग्धं यावन्न तद्भवेत्पिण्डम् ।

आकृष्य चाथ[10] सूतं पिण्डे शेषं तथा पुनः पाच्यम् ॥ ५६ ॥

तद्विधानमाह—मृद्वित्यादि । माषचूर्णितजातं[11] कामणपिण्डं तावत् सुपक्वं कर्तव्यं यावद्दग्धं न भवेत् । केन सुपक्वं ? मृद्वग्निना कोमलवह्निना[12] पुटैः[13]; तत्पिण्डतः शेषं शिष्टं[14] तं निर्मलपारदं आकृष्य गृहीत्वा पिण्डमन्यस्मिन् पिण्डे तथा पूर्वप्रकारेण पाच्यमिति ॥ ५६ ॥

अथवाप्यौषधपिण्डे दोलातप्ते खर्परे[15] विधिना ।

पुनरपि पिण्डे क्षेप्यं गर्भे[16] यावद् द्रुतिर्भवति ॥ ५७ ॥

---

१ "सिष्टी" ग. । २ अथ केचिद् ग. । ३ पिष्टिर्भवति वेति ग. । ४ "पाको ऽथ" इति केचित् । ५ वटकविधाने ग. । ६ "० स्तेन योगेन" ख. । ७ "माषैः" इति केचित् । ८ स्यात्सुदृढं पि० ख. । ९ तैलयोगेन वटकविधानेन माषवटकविधौ पाकः कर्तव्यः ग. । १० स्वच्छ ग. । ११ तन्माषचू० ख. ग. । १२ केवलवह्निना ग. । १३ पुनः ख. । १४ स्वच्छं सूतं ग. । १५ सुखर्परे ख. ग. । १६ गर्भेण वयो द्रु० ग. ।

सरति सुखेन[1] च सूतो दहति मुखं नैव हस्तपादादि ।

क्रमति रसः फणि[2]योगान्माक्षिकयुतहेमगैरिकया ॥ २७ ॥

पूर्वोक्तगुणानाह सरतीत्यादि । पूर्वविधिना सूतः सरति, सारितः सूतो मुखं न दहति हस्तपादादि च अङ्गविभागं नैव दहति । पुनः फणियोगात् नागसंयोगतः, माक्षिकयुतहेमगैरिकया सह ताभ्यामिलितस्वर्णगैरिकया सार्धं क्रामति मिलति ॥ २७ ॥

माक्षीकसत्त्वयोगात्फणियोगान्नागवद् द्रवति शीघ्रम् ।

द्र[3]वति च कनके सूतः[4] संसार्यते विधिना ॥ २८ ॥

सुखेन[5] सारणविधानमाह—माक्षिकेत्यादि । कनकं हेम, माक्षिकसत्वयोगात्फणिसंयोगान्नागसंयोगाच्च शीघ्रं द्रवति, कनके द्रवति सति विधिना सारणतैलादिना संसार्यते सारणा क्रियत इति ॥ २८ ॥

तस्माद् द्रव्यविधायी सूतो बीजेन सारितोऽलघुना[6] ।

समसारितः सुबद्धो[7] मूषायां स्यात्समावर्तः[8] ॥ २९ ॥

सारणया पारदगुणानाह—तस्मादित्यादि । तस्माद्धेतोः, सूतो द्रव्यविधायी 'स्यात्' इति शेषः, द्रव्यकर्तेत्यर्थः । अलघुना बीजेन अनल्पपरिमाणेन महाबीजेन सारितः सन् समसारितः सन् बद्धो 'भवेत्' इत्यध्याहारः । मूषायां समावर्तः द्रवणं स्यात् 'वह्निधमनात्' इति शेषः ॥ २९ ॥

सारितवर्तित[9]सूतः समानबीजेन मिलति यः सार्यः[10] ।

द्विगुणेन प्रतिसार्यः[11] स[12] चानुसार्यश्च त्रिगुणेन ॥ ३० ॥

सारणक्रममाह—सारितेत्यादि । सारितवर्तितसूतः सारितश्चासौ वर्तितश्चेति विग्रहः । यः समानबीजेन तुल्यमहाबीजेन मिलति स सार्यः, यो द्विगुणेन मिलति सः प्रतिसार्यः, यश्च त्रिगुणेन सोऽनुसार्य इति सारणाक्रमो दर्शितः ॥ ३० ॥

---

१ मुखेन ग. । २ सुनियोगा० ख. ग. । ३ भवति ख. ग. । ४ सूतः ७ ०तः द्रवति च सं० ख. ग. । ५ मुखेन ख. ग. । ६ ०तो लघुना ग. । समबद्धो ख. । तसमबद्धो ग. । ८ स्यात्समाच्चनतः ख. ग. । ९ सारितावर्तित० ख. । सारितावर्तितः ग. । १० क्षीणः ख. ग. । ११ प्रतिसार्यं ख. ग. । १२ समानु० ख. । सतानु० ग. ।

शतवेधी सार्य[1]ः प्रतिसारितः स्यात्सहस्रवेधी च ।

अनुसारितोऽयुतेन च विधिनाऽपि बलाबलं ज्ञात्वा ॥ ३१ ॥

सारणक्रमस्य गुणानाह—शतेत्यादि । यः सार्यः समसारितः स शतवेधी स्यादित्यभिप्रायः । पुनः प्रतिसारितः द्विगुणबीजेन सारितो यः सूतः स सहस्रवेधी स्यात् । च पुनः अनुसारितः त्रिगुणबीजेन सारितः स अयुतेन अयुतवेधी स्यादिति व्यक्तिः । विधिना इत्युक्तविधानेन । बलाबलं ज्ञात्वा न्यूनाधिक्यं मत्वा विधिना युक्त इति शेषः ॥ ३१ ॥

अनुसारितेन तु[2] समः स्वच्छः सूतः सारितस्तदनु ।

स भवति लक्षवेधी प्रतिसारितोऽयु[3]तवेधी च ॥ ३२ ॥

सारितप्रतिसारितादनुसारितस्य[4] विशेषमाह—अन्वित्यादि । तु पुनः, स्वच्छः प्रधानसंस्कारैः संस्कृतः सूतः, अनुसारितेन समः त्रिगुणबीजेन सारितोऽनुसारितस्तेन तुल्यो यदि स्यात्स च लक्षवेधी स्यात् । एवं प्रतिसारितः सूतः समेन सारितो अयुतवेधी स्यात् । एवं स्वच्छातिस्वच्छवृद्धौ वेधस्यापि वृद्धिः स्यादिति रहस्यम् ॥ ३२ ॥

कोटिं विध्यति सूतोऽप्यनुसारितः सरति बीजेन ।

प्रतिसारिते[5]न तु सारितो दशकोटिं विध्यते सूतः ॥ ३३ ॥

तथोत्तरसत्त्वेन गुणाधिक्यमाह—कोटिमित्यादि । सूते सरति बीजेन ग्रासन्यायं विहाय समेन बीजेनानुसारितो यः स कोटिसंख्यां धातूनामिति शेषः, सूतो विध्यति । यथोक्तसारिते सूते दशगुणवृद्धिः सर्वत्रैवेति वेदितव्यम् ॥ ३३ ॥

प्रतिसारितस्तथाऽब्जं त्वनुसारितः खर्ववेधी च ।

एवं सारणयोगात्कुरुते वेधं यथेप्सितं विधिना ॥ ३४ ॥

विशेषमाह—प्रतीत्यादि । प्रतिसारितः सूतो द्विगुणबीजेन वारैकेन सारितो रसः, अब्जसंख्यां विध्यति । तु पुनरनुसारितः त्रि-

---

१ सूतः ख. ग. । २ अनुसारिते तु ख. । अनुसारिते नु ग. । ३ ०सारितः प्रयुत० ख. ग. । ४ ०सारितात्सारितस्य ग. । ५ ०तेनानुसारितो ख. ग. ।

गुणेन बीजेन वारैकेन सारितः सूतः खर्ववेधी स्यात्, खर्वसंख्याके द्रव्यसंबन्धं करोतीत्यभिप्रायः। एवमुक्तप्रकारेण विधिना शास्त्रज्ञवार्तिकसंप्रदायेन, सारणयोगात् यथेप्सितं वेधं कुरुते यथावाञ्छितमित्यर्थः ॥ ३४ ॥

अनुसारितेन सारितो विध्यति शुल्वं निखर्वसंख्याकम्।

प्रतिसारितस्तु विध्यति पद्मं[1] स्वनुसारितः शङ्खम्[2] ॥ ३५ ॥

पुनर्विशेषमाह—अन्वित्यादि। अनुसारितेन त्रिगुणप्रथमग्रासन्यायेन बीजेन सारितः सूतो निखर्वसंख्याकं शुल्वं विध्यति, तु पुनः प्रतिसारितः षड्गुणप्रथमग्रासन्यायेन सारितः सूतो पद्मसंख्याकं विध्यति। पुनः अनुसारितो नवगुणग्रासन्यायेन बीजेन सारितः सूतः शङ्खसंख्यां विध्यतीति ॥ ३५ ॥

विद्धे[2]येद् द्विगुणं द्रव्यं नागं दत्त्वाऽनुवाहयेच्छनकैः।

तावद्यावत्कनकं दिव्यं प्रोन्मीलयेत्सकलम् ॥ ३६ ॥

इति परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पादविरचिते
रसहृदयतन्त्रे सारणात्मकः षोडशोऽवबोधः ॥१६॥

पुनर्विशेषमाह - विद्धयेदित्यादि। कनकं हेम दत्त्वा, शनकैर्नीचैस्तावदनुवाहयेत् यावद्दिव्यं प्रवरं कनकं, भवेदिति शेषः। पुनर्यावत्सकलं समस्तं नागं प्रोन्मीलयेन्निश्शेषं कुर्यादित्यभिप्रायः। पुनस्तत्कनकं द्विगुणं स्वतो द्रव्यं विध्येत्, वा सूतकेन सारितं सत् द्रव्यं शतसहस्रादिसंख्यातो द्विगुणसंख्याकं द्रव्यं शुल्बादिकं विद्धयेदिति रहस्यम् ॥ ३६ ॥

इति श्रीमत्कुरलवंशपयोधिसुधाकरमिश्रमहेशात्मजचतुर्भुजविरचितायां मुग्धावबोधिन्यां रसहृदयटीकायां सारणात्मकः षोडशोऽवबोधः ॥ १६ ॥

---

# अथ सप्तदशोऽवबोधः।

## अथ क्रामणम्।

इति कृतसारणविधिरपि बलवानपि सूतराट् क्रियायोगात्।

संवेष्ट्य[3] तिष्ठति लोहं नो विशति क्रामणारहितः ॥ १ ॥

---

१ सङ्ख्यम् ग.। २ विध्यति द्वि॰ ग.। ३ संवेष्ट्यति ततो लोहं ख. ग.। "संवेष्ट्यति च लोहं" इति पठनीयम्। सं॰।

अथ क्रामणमभिधास्यते ।

सुसंस्कृता मुखान्तःस्था विशदाश्च हितार्थकाः ।
तथा परोचिताः पूता भवन्त्यमरजा गिरः ॥१॥

अथ क्रामणप्रशंसामाह—इतीत्यादि । इति उक्तविधानेन, कृतः सारणस्य विधिर्यस्मिन् सूतराजे एवंविधः सूतराट्, बलवान् भवेदिति शेषः । कुतः? क्रियायोगात्कृत्यकरणात् । यादृक् कृत्यं क्रियते तादृक् बलवान् स्यादित्यभिप्रायः । एवंविधोऽपि क्रामणारहितः क्रामणवर्जितो लोहं न विशति लोहान्तःप्रवेशं न करोति, ततो हेतोर्लोहं धातुं संवेष्ट्य परिवेष्टनं कृत्वा, तिष्ठति बाह्यरागदायी स्यादिति ॥१॥

अन्नं[1] वा द्रव्यं वा यथानुपानेन धातुषु क्रमते ।
एवं क्रामणयोगाद्रसराजो विशति लोहेषु ॥ २ ॥

देहलोहयोः सादृश्यमाह—अन्नमित्यादि । यथेति सादृश्ये । अन्नं गोधूमादिकं वा द्रव्यं औषधं, अनुपानेन सह जलादिना सार्धं धातुषु मांसादिषु सप्तसु, क्रमते व्याप्नोति, तथा अमुना वक्ष्यमाणविधानेन, क्रामणयोगात् क्रामणाय योगः कुनटीमाक्षिकविषादिस्ततः, सूतराजो लोहरूप्यादिषु विशति बाह्याभ्यन्तरं विध्यतीत्यर्थः ॥ २ ॥

कान्तविषरसकदरदै रक्तैतैलेन्द्रगोपकाद्यैश्च ।
क्रामणमेतच्छ्रेष्ठं[2] लेपे क्षेपे सदा योज्यम् ॥ ३ ॥
कुनटीमाक्षिक[3]विषं नररुधिरं वायसस्य विष्ठा च ।
महिषीणां कर्णमलं स्त्रीक्षीरं क्रामणे बलकृत् ॥ ४ ॥
टङ्कणकुनटीरामठभूमिलतासंयुतं महारुधिरम् ।
क्रामणमेतत्कथितं[4] लेपे क्षेपे सदा योज्यम् ॥ ५ ॥

क्रामणयोगमाह - कान्तविषेत्यादि । कान्तं चुम्बकं, विषं कन्दजं विषं, कन्दविषाणि कालकूटादीनि त्रयोदश, दरदं हिंगुलं, तैः; च पुनः रक्ततैलेन्द्रगोपाद्यैः रक्तो रक्तकवर्गः, तैलं कंगुण्यादेः, इन्द्रगोपो जीवविशेषः, इत्याद्याः क्रामणोचितास्तैश्च । एतत् श्रेष्ठं सर्वोत्तमं

---

१ अन्यं ख. ग. । २ ०ष्ठं क्रामति लेपे सदा ख. ग. । ३ ०माक्षीक० इति पठनीयम् । सं० । ४ ०तं क्रामति लेपे सदा ख. ग. ।

क्रामणं; अनेन सूतः क्रामति विशति लोहेष्विति व्याप्तिः; तत्क्रामणं कथितम् । तल्लेपे लेपे च योज्यमित्यर्थः ॥ ३—५ ॥

शिलया निहतो नागो वङ्गं वा तालकेन[1] शुद्धेन ।

क्रमशः पीते शुक्ले क्रामणमेतत्समुद्दिष्टम् ॥ ६ ॥

अन्यच्चाह--शिलयेत्यादि । नागः सीसकः, शिलया मनोह्वया, निहतो मारितः पुनः वङ्गं शुद्धेन दोषवर्जितेन तालेन निहतं; क्रमशः क्रमेण, पीते हेमकर्मणि, शुक्ले रूप्यकर्मणि, एतत्क्रामणं समुद्दिष्टं सम्यक् प्रकाशितं; पीतकर्मणि नागः, शुक्लकर्मणि वङ्गं च नियोजितव्यमित्यर्थः ॥ ६ ॥

तीक्ष्णं दरदेन हतं शुल्बं वा ताप्यमारितं विधिना ।

क्रामणमेतत्कथितं कान्तमुखं माक्षिकैर्वापि ॥ ७ ॥

अन्यच्चाह--तीक्ष्णमित्यादि । दरदेन हिंगुलेन, हतं मारितं, तीक्ष्णं सारं; विधिना अरिवर्गविधानेन, ताप्येन स्वर्णमाक्षिकेन मारितं, शुल्बं ताम्रं; एतदपि क्रामणं कथितं; वा कान्तमुखं कान्तं लोहजाति उक्तं ग्रन्थादौ तत् मुखं प्रधानं यस्य तत् माक्षिकैर्वा 'मारितं नियोज्यं' इति शेषः ॥ ७ ॥

माक्षिकसत्त्वं नागं विहाय न क्रामणं किमप्यस्ति ।

दलसिद्धे रससिद्धे विधावसौ भवति खलु सफलः ॥ ८ ॥

इति परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पाद-
विरचिते रसहृदयतन्त्रे क्रामणात्मकः
सप्तदशोऽवबोधः ॥ १७ ॥

विशेषविधानमाह—माक्षिकसत्त्वमित्यादि । माक्षिकसत्त्वं ताप्यसारं, नागः सीसकः, तं विहाय नान्यत्किमप्यस्ति क्रामणं न क्रामणमिति भावः । खल्विति जिज्ञासायाम् । दलसिद्धे विधौ संस्कारैः पूर्णतां नीते सति असौ विधिः सफलः ॥ ८ ॥

इति श्रीमत्कुरलवंशपयोधिसुधाकरमिश्रमहेशात्मजश्रीचतुर्भुज-
विरचितायां मुग्धावबोधिन्यां रसहृदयटीकायां क्रामणा-
त्मकः सप्तदशोऽवबोधः ॥ १७ ॥

---

१ तालकहतेन शु० ग. ।

# अथ अष्टादशोऽवबोधः ।

## अथ वेधविधानम् ।

अनया खलु सारणया क्रामणेन च विशति योजितो विधिवत्।
असति वेधविधौ न रसः स्वगुणान्प्रकाशयति ॥ १ ॥

अथ वेधविधानमभिधास्यते ।

"व्यवायिभेषजोपेते द्रव्ये क्षिप्तो रसः खलु ।
वेध इत्युच्यते तज्ज्ञैः स च नैकविधः स्मृत ॥" इति परिभाषा।

क्रामणसंस्काराधिकारमाह—अनयेत्यादि । अनया उक्तया सारणया सह क्रामणसंस्कारे कृते सति, रसो विशति क्रामति, पुनर्वेध विधौ कृते सति रसः स्वगुणान् प्रकाशयतीति वेदितव्यम् ॥ १ ॥

रसदरदताप्यगन्धकमनःशिलाराजवर्तकं विमलम् ।
पुटमृतशुल्वं तारे निर्व्यूढं हेमकृष्टिरियम् * ॥ २ ॥

वेधविधानमाह—रसेत्यादि । रसः सूतः, दरदं हिङ्गुलं, ताप्यं माक्षिकं, गन्धकः प्रतीतः, मनःशिला मनोह्वा, राजवर्तकं राजावर्तं, विमलं रौप्यमाक्षिकं, एकवद्भावद्वन्द्वः । पुटमृतशुल्वं रसादीनां पुटेन मृतमित्यर्थः । एवंविधं शुल्वं तारे निर्वाहितं, इयं हेमकृष्टिः स्वर्णकरणमित्यर्थः ॥ २ ॥

अष्टानवतिर्भागास्तारस्त्वेकोऽपि कनकभागः स्यात् ।
सूतस्यैको भागः शतांशविधिरेष विख्यातः† ॥ ३ ॥

---

१ क्रामणं च दिग्वसति यो० ख. ग. । "क्रामणेन विशति यो०" इति पठनीयम् । सं० । २ असौ ते ग. । ३विधानमाह ख.ग. । ४ अस्माच्छ्लोकात्पूर्वमेकोऽन्यः श्लोकः ख. ग. पुस्तके उपलभ्यते । निमित्तमादाय सतां पुरास्य श्रीभारतीभावरसेन पुष्टः । सिञ्चन् जगन्ती वसुधारि……॥ ५ चानेकविधः ग.। ६राजावर्तकं ख.ग.। ७ तारं ख.ग.।

* रूप्यं वा जातरूपं वा रसगन्धादिभिर्हतम् । समुत्थितं च बहुशः सा कृष्टी हेमतारयोः ॥ कृष्टीं क्षिपेत्सुवर्णान्तर्न वर्णो हीयते तया । स्वर्णकृष्ट्या कृतं बीजं रसस्य परिरञ्जनम् ॥

† तथा चान्यत्र—अष्टानवतिभागं तु रूप्यमेकं च हाटकम्।
सूतैकेन च वेधः स्याच्छतांशविधिरीरितः ॥

वेधविधानमाह—अष्टानवतिरित्यादि । एष रसदरदेत्यादिशतांशवेधविधिः कथं ? अत्र शतांशे अष्टानवतिर्भागास्तारस्य रूप्यस्य, पुनरिह कनकभागः स्यात् एक एवेति, पुनः सूतस्य दरदादिमिलितरसस्यैको भागः एकांशः; इति सर्वे शतांशाः, शतांशेन वेध इति ॥ ३ ॥

एकोन[1]पञ्चाशद्भागास्तारस्येह तथैव शुल्बस्य ।

कनकस्यैको भागो वेधश्चैकेन सूतस्य* ॥ ४ ॥

अन्यच्चाह—एकोनपञ्चाशदित्यादि । एकोनपञ्चाशद्भागाः तारस्य रूप्यस्य कार्याः, तथैव शुल्बस्य ताम्रस्य एकोनपञ्चाशद्भागाश्च कार्याः, पुनः कनकस्य हेम्नश्च एको भागः कार्यः, सूतस्य च एकेन भागेन वेध इति, एषोऽपि शतांशविधिः ॥ ४ ॥

एवं सहस्रवेधी नियुज्यते कोटिवेधी च ।

जारणबीजवशेन तु सूतस्य बला[2]बलं ज्ञात्वा ॥ ५ ॥

पूर्वोक्तविधेर्विशेषमाह—एवमित्यादि । एवं शतांशवेधन्यायेन दशवृद्धिविभागेन सहस्रवेधी स्यात् । एवं च जारणाबीजवशेन जारणायां यद्बीजं कियद्गुणजारितमिति भावः, तद्वशेन कोटिवेधी च स्यात् । किं कृत्वा ? तेनैव जारणबीजवशेन यत्तस्य बलाबलं न्यूनाधिक्यं तत् ज्ञात्वेत्यभिप्रायः ॥ ५ ॥

दत्त्वादौ प्रतिवापं लाक्षामत्स्यादिपित्तभावनया ।

तारे वा शुल्बे वा तारारिष्टे त[3]था कृष्टौ[4] ॥ ६ ॥

विशेषेण वेधविधानमाह—दत्त्वेत्यादि । आदौ प्रथमं, लाक्षामत्स्यादिपित्तभावनया लाक्षा प्रतीता, मत्स्यादिपित्तानि मत्स्यमहिषमयूराजसूकरसंभवानि पित्तानि, तेषां भावनया कृत्वा, प्रतिवापं गलिते निक्षेपं; तत्तारे दत्त्वा अथवा शुल्बे प्रतिवापं कुर्यात्; अथवा कृष्टौ हेमकरणे वापं दत्त्वा नियुञ्ज्यादिति शेषः ॥ ६ ॥

---

१ "एकोनाः पञ्चाश०" इति पठनीयम् । सं० । २ चञ्चलं ख. ग. । ३ "ऽथवा" इति पठनीयम् । सं० । ४ आयुर्वेदप्रकाशे तु चत्वारः प्रतिवापाः सुलाक्षया मत्स्यपित्तभावितया । तारे वा शुल्बे वा तारारिष्टे ऽथवा कृष्टौ । इति पाठान्तरमुपलभ्यते ।

* तन्त्रान्तरे ऽप्युक्तं—चन्द्रस्यैकोनपञ्चाशत्तथा शुद्धस्य भास्वतः । वह्निरेकः शम्भुरेकः शतांशविधिरीरितः ॥ अत्र चन्द्रस्य रूप्यस्य, भास्वतः ताम्रस्य, वह्निः सुवर्णं, शम्भू रसः, इत्यवगन्तव्यम् ।

तदनु क्रामणमृदिते तत्कल्केनापि पिण्डितरसेन ।
अतिविद्रुते[1] च तस्मिन्वेधोऽसौ[2] कुन्तवेधेन[3] ॥ ७ ॥

विशेषाद्याह—तदन्वित्यादि । तदनु लाक्षामत्स्यादिपित्तभावनया अनन्तरं,तस्मिन् लाक्षादिकल्के, क्रामणमृदिते कान्तरसकदरदरक्ततैलेन्द्रगोपाद्यैर्मृदिते सति, पुनस्तत्कल्केन तच्चूर्णेनापि पिण्डितरसेन वेधः कर्तव्य इति शेषः । कस्मिन् ? तारे वा शुल्बे वा, विद्रुते जलरूपे कार्य इत्यर्थः[4] ॥ ७ ॥

तत्तैलार्द्रपटेन स्थगयेत्पललेन भस्मना वापि ।
विधिवद्वेध्यं द्रव्यं रसराजक्रामणार्थं हि ॥ ८ ॥

विशेषमाह—तदित्यादि । वेध्यं वेधोचितं द्रव्यं, रसराजक्रामणार्थं यथा रसो विशति तदर्थं, तं तैलार्द्रपटेन वस्त्रेण, स्थगयेत् आच्छादयेत्, वा पललेन केनचिन्मांसेन, वा भस्मना आच्छादयेदित्यर्थः ॥ ८ ॥

इति सारितस्य कथितं रसस्य[5] वेधादि क्रामणं कर्म ।
पादादिजीर्णबीजो[6] युज्यते पत्रलेपेन ॥ ९ ॥

विशेषमाह—इतीत्यादि । सारितस्य उक्तविधानेन सारणाकृतस्य, वेधादिक्रामणं कर्म वेधविधानोदितक्रामणं कर्म कथितम् । पादादिजीर्णबीजः पादादिना पादार्धेन समतो न्यूनेन च जीर्णं बीजं यस्मिन् सः पत्रलेपेन युज्यते, अतः पत्ररञ्जनं स्यादित्यभिप्रायः ॥ ९ ॥

अम्लाद्युद्वर्तिततारारिष्टादिपत्रमतिशुद्धम् ।
आलिप्य रसेन ततः क्रामणलिप्ते पुटेषु विश्रान्तम्[9] ॥ १० ॥

---

१ अतिद्रुते ख. ग. । २ वेध्योऽसौ ख. ग. । ३ आयुर्वेदप्रकाशे तु–तदनु क्रामणमृदितः सिक्थकपरिवेष्टितो देयः । अति विद्रुते च तस्मिन् वेध्योऽसौ कुन्तवेधेन ॥ ४ शुल्बे ताराऽरिष्टे विद्रुते जलरूपे असौ कुन्तवेधः कार्यः ख. ग. । ५ रसवेधादि ख. ग. । ६ बीजं संयुज्यते ख. । बीजं स युज्यते ग. । बीजो नियुज्यते इति पठनीयम् । सं० । ७ जीर्णबीजं ख. ग. । ८ अम्लादिभिरुद्वर्तित० इति पठनीयम् । सं० । ९ अत्यम्लितमुद्वर्तिततारारिष्टादिपत्रमतिशुद्धम् । आलिप्य रसेन ततः क्रामणलिप्तं पुटेषु विश्रान्तम् ॥ इति आयुर्वेदप्रकाशस्थः पाठः ॥

अतिशुद्धं निर्मलं अम्लाद्युद्वर्तितं तारारिष्टशब्दात्सितं स्वर्णं ग्राह्यं, ततः रसेनालिप्य, ततः कामणालिप्ते कामणपिण्डेन लेपे कृते सति, पुटेषु उत्पलाग्नौ विश्रान्तं स्थापितं कुर्यात् । पत्ररञ्जनविधिरयम् ॥१०॥

अर्धेन मिश्रयित्वा हेम्ना ज्येष्ठेन[2] तद्दलं पुटितम् ।

क्षितिखगपटुरक्तमृदा वर्णे पुटोऽयं[3] ततो देयः ॥ ११ ॥

अथ स्वर्णविधानमाह—अर्धेनेत्यादि । अर्धेन अर्धविभागेन, रञ्जितदलादित इति ज्ञेयम् । ज्येष्ठेन हेम्ना प्रवरकनकेन, तद्दलं रञ्जितपत्रं[4], मिश्रयित्वा पुटितं कुर्यात् यथा मिलति । पुनः क्षितिखगपटुरक्तमृदा कृत्वा क्षितिः स्फटिकः, खगः पीतकासीसं, पटु सैन्धवं लवणं, रक्तमृत् गैरिकं, एकवद्भावद्वन्द्वः, तेन क्षित्यादिनोपरि लिप्तं दलं प्रति अयं पुटो देयः, वनोपलैरिति शेषः ॥ ११ ॥

भूपतिवर्तकचूर्णं शिरीषपुष्परसभावितं बहुशः ।

सद्यः करोति रक्तं सितकनकमसित[5]भागेन ॥ १२ ॥

वर्णविधानमाह—भूपतीत्यादि । भूपतिवर्तकचूर्णं राजावर्तरजः, बहुशो बहुवारं, शिरीषपुष्परसभावितं 'कुर्यात्' इत्यध्याहार्यम् । भावितं घर्मपुटितमिति, 'विधानवित्' इति शेषः ॥ १२ ॥

रसदरदविमलताप्यं पटुशिला[6]माक्षीकनृपावर्त[7] ।

प्रवालकङ्कुष्ठटङ्कणगैरिकप्रतिवापितं सितं कनकम् ॥ १३ ॥

अन्यच्चाह—रसेत्यादि । रसः सूतः, दरदं हिङ्गुलः, विमलं ताप्यभेदः; पटु सैन्धवं, शिला मनोह्वा, माक्षिकं प्रतीतं वर्णिद्रव्यं, नृपो राजावर्तः; प्रवालं विद्रुमं, कङ्कुष्ठं विरङ्गं, टङ्कणं सौभाग्यं, गैरिकं प्रतीतं; एतैः प्रतिवापितं सितद्रव्यं कनकं 'भवेत्' इत्यध्याहार्यम् ॥१३॥

तापीभवनृपावर्तबीजपूररसार्दितम् ।

करोति पुटपाकेन हेम सिन्दूरसन्निभम् ॥ १४ ॥

---

१ पत्रवेधनमाह—अति० ख. ग. । २ श्रेष्ठेन इति आ० प्र० । ३ वर्णपुटोऽयं आ० प्र० । ४ रजतपत्रं ग. । ५ ०मशीति० ग. । ०मशिति ख. । ६ सैन्धवशि० ख. ग. । लवणशि० इति पठनीयम् । सं० । ७ नृपावर्तं ख. ।

अन्यच्चाह—तापीभवेत्यादि । तापीभवं माक्षिकसत्त्वं, नृपावर्तं राजावर्तकं, एतद्द्वयं बीजपूररसार्दितं मातुलुङ्गरसमर्दितं कुर्यात्, एतदुभयोर्योगात् कनकं पुटपाकेन वह्निविधानेन कनकं पूर्वोक्तं यत्कनकं वा हीनवर्णकनकं सिन्दूरसन्निभं करोति । सिन्दूरवन्निभा यस्येति समासः ॥ १४ ॥

वङ्गाभ्रं सितमाक्षीकं शैलं वा वाहयेत्सिते[1] ।
तत्तारं च दशांशेन तारोत्कर्षं[4] करोति हि* ॥ १५ ॥

अथ तारवर्णविधानमाह—वङ्गेत्यादि । वङ्गाभ्रमिति वङ्गं त्रपु, अभ्रं श्वेताभ्रं, पुनः सितमाक्षीकं विमलं शैलं श्वेतशिलाजतु, वा सिते तारे वाहयेत् । पुनर्दशांशेन एतदौषधनिचयं तारतो दशमविभागेन कृत्वा, हि निश्चितं, तारोत्कर्षं करोति हीनवर्णत[2] उत्तमं करोतीत्यभिप्रायः ॥ १५ ॥

नागः करोति मृदुतां निर्व्यूढस्तां च रक्ततां च रविः ।
तां पीततां च तीक्ष्णं काचस्तत्[3]कालिकाविनाशं च ॥ १६ ॥

तारे विशेषमाह—नाग इत्यादि । नागः सीसकस्तारे निर्व्यूढो मृदुतां कोमलत्वं करोति । पुनः रविस्ताम्रं निर्व्यूढं सत् तां मृदुतां, च पुनः रक्ततां लोहितनिभां करोति । च पुनस्तीक्ष्णं तारनिर्व्यूढं तां रक्ततां, पीततां च करोति । पुनः काचः प्रतीतो लोके, स कालिकविनाशं करोतीति तारे निर्व्यूढ इति संबन्धः ॥ १६ ॥

कनकारुणसममाक्षिककरञ्जतैलाप्लुतो ध्मातः ।
पाते पाते दश दशं[5] विन्दति यावद्धि कोटिमपि ॥ १७ ॥

हेम्नो विशेषमाह—कनकारुणेत्यादि । कनकं हेम, अरुणं ताम्रं, समं तुल्यभागं, माक्षिकं ताप्यं, अयं गणः करञ्जतैलप्लुतो ध्मातः कार्यः । पुनः पाते पाते वारंवारं निक्षेपे सति दश दशं गुणोत्कर्षं

---

१ ०हयेत्सितम् ख. ग. । २ हीनवर्णतारं उत्तमं प्रतिवापेन करोति ख. ग. । ३ काचः कालिक० इति पठनीयम् । सं० ।
४ वर्णोत्कर्षं ख. ग. । ५ वर्णोत्कर्ष वि० ख. ग. ।

*तन्त्रान्तरे-वङ्गाभ्रं वाहयेत्तारे गुणानि द्वादशैव तु । एतद्बीजे समे जीर्णे शतवेधी भवेद्रसः ॥

विन्दति 'ध्मात' इत्यध्याहारः । हि निश्चितम् । कियत्कालं ? यावत्कोटिसंख्यां विन्दति ॥ १७ ॥

स चायमतिविलीनः कङ्गुणीतैलसेचितो बहुशः ।
माक्षीकरविनिवापं विध्यति कनकं शतांशेन ॥ १८ ॥

विशेषमाह—स इत्यादि । सः करञ्जतैलयुतो योगो, बहुशो वारंवारं, कंगुणीतैलेन सेचितो यथा स्यात्तथायं अति विलीनः सन् माक्षिकरविनिवापं पुनः कार्यं; एवंविधं च कनकं शतांशेन शतविभागेन विध्यति सितकनकमिति ॥ १८ ॥

शुल्बहतं रसगन्धाहतखगपीतं दशांशेन ।
विध्यति कनकं कुरुते तन्निर्व्यूढं मर्दितं सुदृढम् ॥ १९ ॥

विशेषमाह—शुल्बेत्यादि । शुल्बहतं शुल्बेन सह हतं; रसगन्धं सूतगन्धं तेन आहतं पञ्चत्वमापन्नं यत्खगपीतं पीतकासीसं एतद्दौषधसमुच्चयं सुदृढं यथा स्यात्तथा मर्दितं कुर्यात्, पुनस्तत् निर्व्यूढं दशांशेन विध्यति सितकनकं कुरुते स्वर्णमिति विशेषः ॥ १९ ॥

रसकसमं सुध्मातं कनकं भुक्त्वा ततोऽर्कचन्द्रलेपेन ।
माक्षिकसत्त्वं हेम्ना करोति जीर्णो रसः शतांशेन ॥ २० ॥

अन्यच्चाह—रसकेत्यादि । ततोऽनन्तरं, अर्कचन्द्रलेपेन कनकं रसकसमं ध्मातं कुर्यात्, पुनरेतदौषधं भुक्त्वा कनकं स्यात्, पुनर्माक्षिकसत्त्वं हेम्ना सह जीर्णं रस शतांशेन विध्यतीत्यर्थः ॥ २० ॥

अष्टगुणं मृतशुल्बं कलधौतेन मूकमूषया लिप्तम् ।
तत्षोडशांशजार्णं विध्यति तारं शतार्धेन ॥ २१ ॥

अन्यच्चाह—अष्टगुणेत्यादि । अष्टगुणं मृतशुल्बं अरिवर्गेण सह हतं यत् शुल्बं ताम्रं, ततः कलधौतेन षोडशांशेन जीर्णं, शतार्धेन पञ्चाशद्विभागेन तारं विध्यति कनकं करोतीत्यर्थः ॥ २१ ॥

आवृत्य कनककरिणौ शिलया प्रतिवापितौ ततो भुक्त्वा ।

---

१ चायं हेमविलीनं ख. ग. । २ सेचितं ख. ग. । ३ रसगन्धं हत० ग. । ४ तद्व्यूढं ग. । ५ हतं यत् रस० ख. ग. । ६ च पुनरेतदौषध० ख. ग. । ७ पुनस्तं ग. । ८ स्वर्णं करोतीति शेषः ख.ग. । ९ जीर्णं रसं ग. । १० लेपेन सह ख. ग. । ११ ०दौषधं कुर्यात् भु० ख. । १२ जीर्णः रसः श० ख. ग. । १३ कलधौते मू० ख. ग. । १४ ०जीर्णो ख. ग. । १५ शतांशेन ख. ग. । १६ सम शिलया ख. ग. ।

दोलायन्त्रे गन्धकजीर्णस्तारे दशांशवेधी स्यात् ॥ २२ ॥

अन्यच्चाह—आवृत्येत्यादि । कनककरिणौ समहेमनागौ, आवृत्य गालयित्वा, शिलया मनोह्वया, प्रतिवापितौ ततोऽनन्तरं दोलायन्त्रे कनककरिणौ भुक्ता गन्धकजीर्णो यो रसः स तारे दशांशवेधी स्यात् दशांशेन विध्यतीत्यर्थः ॥ २२ ॥

रिपुनिहतलोहषट्कं जीर्णो धान्यस्थितश्चतुर्मासम् ।

सहितः पुरसुराभ्यां[1] विध्यति घोषं शतांशेन ॥ २३ ॥

अन्यच्चाह—रिपुनिहतेत्यादि । रिपुनिहतलोहषट्कं रिपुभिररिवर्गैर्निहतं मारितं यत् लोहषट्कं स्वर्णतारताम्रनागवङ्गलोहाभिधानं,तत् चतुर्मासं यथा स्यात्तथा धान्यस्थितोऽन्नकोष्ठीधृतो रसो जीर्णः कार्यः । किंविशिष्टो धान्यस्थितः ? पुरसुराभ्यां गुग्गुलुमदिराभ्यां, सहितो मिलितः, शतांशेन घोषं कांस्यं विध्यति कनकं करोतीत्यर्थः ॥ २३ ॥

वक्ष्ये संप्रति सम्यग्यद्बीजं समरसे जीर्णम् ।

पिष्टिस्तम्भादिविधिं प्रकाशयमानं[2] बुधाः शृणुत ॥ २४ ॥

विशेषमाह—वक्ष्य इत्यादि । भो बुधाः मया प्रकाश्यमानं सत् शृणुत 'सावधाना' इत्यध्याहार्यम् । तत्किं ? संप्रति यद्बीजं समरसे तुल्यसूते सम्यक् जीर्णं जारणमापन्नं, तदहं गोविन्दनामा वक्ष्ये कथयामि । पुनः पिष्टिस्तम्भादिविधिं पिष्टिस्तम्भ आदिर्यस्य विधेस्तं विधिं पाटखोटजलौकाख्यं च वक्ष्ये ॥ २४ ॥

राजावर्तकविमल[3]पीताभ्र[4]गन्धताप्यरसकैश्च[5] ।

काञ्चीकासीसशिलादरदैश्च समन्वितं[6] नागम् ॥ २५ ॥

अथ नागमाह—राजावर्तकेत्यादि । राजावर्तकं प्रसिद्धं, विमलं श्वेतमाक्षिकं, पीताभ्रं पीतवर्णं यदभ्रं, गन्धो गन्धकः, ताप्यं स्वर्णमाक्षिकं, रसकं खर्परिकं, एतैः; पुनरेतैः-कांची काहीति लोके, कासीसं पीतकासीसं, शिला मनोह्वा, दरदं हिंगुलं, तैश्च समन्वितं मिलितं नागं कुर्यादित्यर्थः ॥ २५ ॥

---

१ पुरः सुराभ्यां ग. । २ प्रकाशमानं ग. । ३ विमलं ख. ग. । ४ पीताभ्रक इति पठनीयम् । सं० । ५ रसकश्च ख. ग. । ६ समन्वितो ग. ।

अहिमाररसैः पुटितं मारय नागं निरुत्थकं यावत् ।
तदनु च तस्य हि मध्ये शुल्वं गन्धं च लवणकङ्कुष्ठम् ॥२६॥

तच्चाह—अहीत्यादि । पूर्वौषधसंयुतं नागं अहिमाररसैः करवीरद्रावैः, पुटितं कुर्यात् । नागं सीसकं, तावन्मारय यावन्निरुत्थकं यथा पुनरुत्थितं न स्यात् । तदनु तत्पश्चात्, तस्य नागस्य मध्ये शुल्बं ताम्रं, गन्धं प्रतीतं, लवणं सैन्धवं, कंकुष्ठं विरङ्गं, एतत्सर्वं 'मिश्रितं कुर्यात्' इत्यध्याहार्यम् ॥ २६ ॥

तत्सर्वं शतवारान् भावय पक्वार्कपत्रसलिलैश्च ।
घोषाकृष्टे * शुल्बे चूर्णं निर्वाहयेच्छतशः ॥ २७ ॥

तच्चाह—तदित्यादि । तत्पूर्वोक्तभागयुतं कल्कं, पक्वार्कपत्रसलिलैः पक्वानि यानि अर्कस्य पत्राणि तेषां यानि सलिलानि तैः कृत्वा, भो रसज्ञ ! शतवारान् भावय घर्मपुटनं कुरु, तद्भावितं चूर्णं घोषाकृष्टे कांस्यात्समुद्धृते शुल्बे ताम्रे, शतशः शतवारं निर्वाहयेद्गलितोपरि निक्षिपेदिति ॥ २७ ॥

शुल्बेन तेन हि समं रसकपीताभ्रसत्त्वविमलं च ।
गैरिकमाक्षिकसत्त्वं टङ्कणनागं च तीक्ष्णयुतम् ॥२८॥

तेन शुल्बेन शतशो निर्वाहितताम्रेण सह, समं तुल्यभागं; रसकपीताभ्रसत्त्वविमलं; च पुनः गैरिकमाक्षिकसत्त्वं गैरिकं प्रतीतं, माक्षिकसत्त्वं ताप्यसारं, एतच्च समं; टङ्कणं सौभाग्यं, नागं सीसकं, तीक्ष्णं सारं, सर्वं समसंयुतं 'युज्यत' इति शेषः ॥ २८ ॥

एतैर्द्वन्द्वं कृत्वा माक्षिकवापेन रञ्जयेच्छुल्बम् ।
वारांश्च विंशतिरपि गलितं सेचयेत्तदनु ॥ २९ ॥

एतैरोषधैरुक्तैः, शुल्बेन द्वन्द्वं कृत्वा ताम्रेण सह मेलनं विधाय, शुल्बं विंशतिर्वारान् माक्षिकवापेन रञ्जयेत् । शुल्बमपि गलितं जल-

१रसकं इति पठनीयम् । सं० । २"गलितं तत्" इति पठनीयम् । सं० । ३ चतुर्विंशतिवारान् ग. । ४ वापितं ख. ग. ।

* ताडितं वङ्कनालेन सौषधं घोषकं यदा । स्यान्मुक्तरंगं तत्ताम्रं घोषाकृष्टमिहोच्यते । इति रसतरङ्गिण्याम् । रसरत्न समुच्चयेऽपि—

स्वल्पतालयुतं कांस्यं वङ्कनालेन ताडितम् ।
मुक्तरंगं हि तत्ताम्रं घोषाकृष्टमुदाहृतम् ॥

रूपं, वक्ष्यमाणौषधेषु सेचयेत्तदनु ॥ २९ ॥

निर्गुण्डीकाकमाचीकन्यारसमेलनं कृत्वा ।
वारान् सप्त च विधिना तदपि च निर्वापयेद्धेम्नि ॥ ३० ॥

सेचनौषधान्याह—निर्गुण्डीत्यादि । निर्गुण्डी शेफालिका, काकमाची वायसी, कन्या गृहकन्या कुमारीति प्रसिद्धा, आसां रसेन मेलनं कृत्वा, सप्तवारान् विधिना, तदपि च हेम्नि शुल्वे निर्वाहयेत्[2] । इति युग्मम् ॥ ३० ॥

यावच्चतुर्विंशतिगुणं बीजवरं रञ्जयेत्तच्च[3] ।
पक्कं[4] माक्षिकमेव हि तेन च विधिना तदपि[5] चतुर्विंशतिगुणम् ॥

तच्चाह—यावदित्यादि । यावदित्यवधौ, तत् शुल्वं, तावद्धेम्नि निर्वाहयेत् यावच्चतुर्विंशतिगुणं समाप्नोति, तद्बीजवरं स्यात् । च पुनस्तद्बीजवरसंज्ञकं रञ्जयेत् रञ्जकं भवेदित्यर्थः । च पुनस्तेन विधिना शुल्वविधानेन हि चतुर्विंशगुणं माक्षिकमेव हि[7] पक्कं तदपि बीजवरं स्याद्रञ्जयेच्च ॥ ३१ ॥

तद्बीजं लघुमात्रं रसराजे संस्कृते पूर्वम् ।
मूषायां[8] खलु दत्त्वा दशगुणं च गन्धकं दाह्यम् ॥ ३२ ॥

तद्बीजं लघुमात्रं रसराजे संस्कृते पूर्वमिति रसराजे संस्कृते षोडशसंस्कारविशुद्धे, पूर्वं प्रथमं, लघुमात्रं अल्पपरिमाणं बीजं मूषायां दत्त्वा, पुनर्दशगुणं[10] गन्धकं दाह्यं[11] रसेन्द्रे इत्यर्थः ॥ ३२ ॥

अथवा वालुकयन्त्रे सुदृढे चतुर्दशाङ्गुलमूषायाम् ।
मध्ये सूतं[12] मुक्त्वा लघुतरपुटयोगतो पिहिता ॥ ३३ ॥

तच्चाह—अथवेत्यादि । अथवेत्यारम्भे, सुदृढे कठिने, वालुकायन्त्रे सिकताख्ययन्त्रे, चतुर्दशांगुलमूषायां मध्ये, सूतं[13] मुक्त्वा मूषा

---

१ गृहकन्यारस ख. ग. । २ ०हयेत् बीजवरार्थमिति शेषः ग. । ३ रञ्जयत्तच्च ख. । ४ त्यक्त्वा ख. ग. । ५ "तदपि" इति न पठनीयम् । सं० । तदपि च चतु० ग. । ६ चतुर्विंशतिगुणं ख. ग. । ७ हि हेम्नि त्यक्त्वा तदपिख. ग. । ८ ख.ग. पुस्तकयोस्तु—मूषामादावद्दि द्वादशगुणं (०गुणा ग.) गन्धकं च (च इति नास्ति ग.) दाह्या । ९ मूषां प्रति ख. ग. । १० पुनर्द्वादशगुणं ख. । पुनर्द्वादशगुणा ग. । ११ दाह्या ग. १२ सूतकयुक्ता लघु० ख.ग. । १३ सूतकं युक्ता ख.ग. ।

लघुतरपुटयोगतः अतिशयेन लघुर्लघुतरः लघुतरश्चासौ पुटश्च तस्य योगतः, पिहिता कार्या आच्छादितेति ॥ ३३ ॥

तेन समं बीजवरे पिष्टिः पादांशतः कार्या।

अङ्गुलिनवपरिमाणे[1] मूषामध्ये च पिष्टिकां दत्त्वा ॥ ३४ ॥

अथ पिष्टीविधानमाह—तेनेत्यादि। तेन गन्धकजारितेन सूतेन, समं सार्धं[2], बीजवरे कनकबीजे, पादांशतः[3] पिष्टिः कार्या; च पुनरंगुलिनवपरिमाणे मूषामध्ये अङ्गुलीनव परिमाणं यस्य तस्मिन् एवंविधे मूषामध्ये, पिष्टिं दत्त्वा पिहिता[4] कार्येति शेषः ॥ ३४ ॥

निर्गुण्डी[5]काकमाचीगोजिह्वादुग्धिकारक्ता-

गृहकन्यामधुसैन्धवपिण्डैरपि समन्ततश्छाद्या[6] ॥३५॥

पिष्टिवेष्टनाय पिण्डमाह--निर्गुण्डीत्यादि। निर्गुण्डी शेफालिका, काकमाची वायसी, गोजिह्वा प्रतीता, दुग्धिका या रक्ता रक्तवर्णा, गृहकन्या कुमारिका, मधु क्षौद्रं, सैन्धवं लवणं, एषां पिण्डैः कृत्वा; समन्ततोऽभितः, छाद्या कार्या आच्छाद्येति भावः[7] ॥ ३५ ॥

तावत्कार्यः[8] पुटयोगो यावद् दृढतां समायाति।

षड्गुणगन्धकतालककाङ्क्षीकासीसलवणकक्षारम् ॥ ३६ ॥

जारणाय कल्कमाह—तावदित्यादि[9]। तावत्[10] पुटयोगो वह्निपुटनं कार्यं यावत् दृढतां काठिन्यं समायाति[11] इदं वक्ष्यमाणं; तत् किं? षड्गुणगन्धकतालककांक्षीकासीसलवणकक्षारं गन्धकः प्रतीतः, तालकं हरितालं, कांक्षी वणिग्द्रव्यं, कासीसं पीतकासीसं, लवणं सैन्धवं लवणपञ्चकं वा, क्षारं स्वर्जिकादि, 'ददेत्' इत्यध्याहारः। सर्वत्र षड्गुणसंबन्धः ॥३६॥

ताप्यं तत्सर्वसमं देयं बाह्ये तदौषधि[12]पिण्डम्।

षड्गुणषड्गुणसहितं पिष्टीं यन्त्रेऽथ कच्छपे दत्त्वा ॥ ३७ ॥

---

१ परिमाणा तेन मू०ख. परिमाण ते मू०ग.। २सार्धं पादांशतः बीज० ख.। सार्धं पादान्वितो बीज०ग.। ३ सति ख.ग.। ४ पिण्डान्तः ग.। ५ निर्गुण्डि इति पठनीयम्। सं०। ६ श्छाद्य इति पठनीयम्। सं०। ७ शेषः ग.। ८ 'ताभ्यां पुटयोगेन' इति. पा.। ९ ताभ्यामित्यादि इति पा.। १० ताभ्यां मूषापिण्डाभ्यां ख. ग.। ११ ०याति तावद् इदं ख.ग.। १२ तदौषधी० इति पठनीयम्। सं०। तदौषधिः पिण्डे ग.

तत्राह—ताप्यमित्यादि । ताप्यं स्वर्णमाक्षिकं, तत्सर्वसमं तैः सर्वैः पूर्वोक्तैः षड्गुणैः समं तुल्यं देयं, पुनर्बाह्ये पिष्ट्युपरितः तदौषधि-पिण्डं देयम् । किंविशिष्टं ताप्यं ? षड्गुणषड्गुणसहितं षड्गुणं षड्गुणं यत्पूर्वोक्तमौषधं तेन सहितं षड्गुणमपि ताप्यं ग्राह्यम् । एवंविधां पिष्टीं अथ सिकताख्ययन्त्रानन्तरं कच्छपे कूर्माकारे यन्त्रे दत्त्वा स्वेद्यमित्या-गामिश्लोके संबन्धात् ॥ ३७ ॥

स्वेद्यं पुटयोगेन तु त्रिदिनं घटिकात्रयं[1] यावत् ।
उद्धृत्य[2] ततो यत्नात् पिष्ट्वा मूषां सुचूर्णितां कृत्वा ॥३८॥

तत्राह—स्वेद्यमित्यादि । कच्छपयन्त्रस्थितः खोटो भवेदित्यर्थः॥३८॥

समबीजेन तु सार्यो नागं त्रिगुणं ततः समुत्तार्य ।
प्रतिसारणा च कार्या जारितसूतेन बीजयुक्तेन ॥३९ ॥

विशेषमाह—समेत्यादि । पूर्वपिष्टीस्तम्भितः सूतः[3] समबीजेन तुल्यभागकनकबीजेन, त्रिगुणं नागं दत्त्वा सार्यः । ततः समुत्तार्य प्रतिसारणा जारणा, जारणां प्रति या सारणा द्विगुणबीजसारणारूपा सा कार्येति शिष्टाचारः ॥ ३९ ॥

अनुसारणा च पश्चात् त्रिगुणं बीजं भवेद्यत्र ।
प्रागुक्तं तस्योपरि मृतनागं शतगुणं वाह्यम् ।
तेन च घोषाकृष्टे शुल्बे वेधोऽथ सप्तशतैः ॥ ४० ॥

विशेषाख्याह-अनुसारणेत्यादि । पश्चात्प्रतिसारणानन्तरं, अनुसारणा च कार्या । अनुसारणलक्षणमाह-यत्र त्रिगुणं बीजं भवेत्, जारितमिति शेषः; अनुसारणेयम् । पुनस्तस्योपरि,तस्य बीजस्योपरि प्रागुक्तं मृतनागं शतगुणं वाह्यमिति । तेन सिद्धेन सूतेन घोषाकृष्टे कांस्योद्धृते शुल्बे ताम्रे सप्तशतैः रसवेधः 'कार्यः' इति शेषः ॥ ४० ॥

क्रामणमेतत्प्रागपि माक्षिकदरदगन्धकशिलाभिः ।
राजावर्तकविमलप्रवालकङ्कुष्ठतुत्थविषैः ॥ ४१ ॥

क्रामणमाह—क्रामणमित्यादि प्रागपीति[4] पूर्वाध्यायेऽपि 'प्रोक्तं' इति शेषः । पुनरेतद्वक्ष्यमाणं क्रामणगुणं कुर्यादित्यध्याहारः । स कथं

१ त्रयं यावत् ख. ग. । २ तद्धृत्य ग. । ३ सूतो यः सम ख. ग. ।
४ एतत् क्रामणमिति नागाख्यं प्रागपि प्रथमेऽपि दत्त्वेति शेषः ग. ।

तदाह—माक्षिकेत्यादि । माक्षिकं तार्प्यं, दरदं हिङ्गुलं, गन्धकः प्रतीतः, शिला मनोह्वा, ताभिः । पुनः राजावर्तकेत्यादि । राजावर्तकं 'लाजवरद' इति भाषायां, विमलं सितमाक्षिकं, प्रवालं विद्रुमं, कङ्कुष्ठं विरङ्गं, तुत्थकं शिखिग्रीवं, विषं सक्तुकादिकन्दजं, एतैश्च ॥ ४१ ॥

कान्तगैरिकटङ्कणभूमिलतारुधिरशक्रगोपरसैः ।
महिषीणां[1] कर्णमलैर्मृतलोहं[2] वायसस्य विष्ठा च ॥ ४२ ॥

कान्तेत्यादि । कान्तं चुम्बकं, गैरिकं प्रतीतं, टङ्कणं सौभाग्यं, भूमिलता भूनागः, रुधिरं शक्रगोपः, रसो विषं, पुनरुक्ताद्विषमत्र द्विगुणं तैः । च पुनर्महिषीणां कर्णमलैर्हयारिपत्नीनां श्रवणयोर्मलानि तैः सह, मृतलोहं भृतं च तल्लोहं चेति, वायसस्य काकस्य विष्ठा शकृत् ॥ ४२ ॥

पारावतस्य विष्ठा स्त्रीपयः[3] सर्वमेकतः कृत्वा ।
क्रामणकल्कं चैतच्छतवारान् रक्तपीतगणैः ॥ ४३ ॥

पारावतस्य विष्ठा कपोतशकृत्, स्त्रीपयो नारीक्षीरं, एतत्सर्वं माक्षिकादिस्त्रीक्षीरान्तमेकतः कृत्वा मिश्रितं विधाय, च पुनरेतत्क्रामणकल्कं रक्तपीतगणैः किंशुकादिहरिद्राद्यैः शतवारान् भावयेदित्यागामिश्लोकसंबन्धात् कल्कम् ॥ ४३ ॥

भाव्यं कङ्गुणितैले कौश्चीपित्तभावनाः सप्त ।
कल्केनानेन पचेत्सारितपिष्टिं च हण्डिकायां हि ॥ ४४ ॥

सारणकल्कविधानमाह[4]—भाव्यमित्यादि । पूर्वोक्तसारणकल्कं कङ्गुणीतैले ज्योतिष्मतीस्नेहे भाव्यं; ततो कौश्चीपित्तभावनाः सप्त देयाः दातव्याः । पुनः सारितपिष्टिं सारिता या रसेन्द्रबीजपिष्टिस्तामनेन कल्केन हण्डिकायां पचेत् वह्निना पाकः कर्तव्यः ॥ ४४ ॥

यावद्रक्ता[5] भवति हि गच्छति नागं समुत्तार्य ।
तावत्क्षेपं[6] च क्षिपेत्सर्वस्मिन्सारणादौ च ॥ ४५ ॥

सारणकल्कपाचनमाह—यावदित्यादि । पूर्वकल्कसंयुतां पिष्टिं

---

१ महिषीकर्णमले मृत० ख. ग. । २ मृतश्चासौ लोहश्चेति ग. ३ स्त्रीपयश्च इति पठनीयम् । सं० । ४ जारण० ख. ग. । ५ यावद्रसाद्द्रवति ख. । ०द्रसा द्रवति ग. । ६ क्षेपं क्षिपे० ख. । क्षेपे क्षेपत्स० ग. ।

कियत्कालं पचेत् ? यावद्रक्ता भवति, नागं च गच्छति नागनाशः स्यात्, नागे गच्छति सति समुत्तार्य, पुनस्तावत्सर्वस्मिन्सारणादौ च क्षेपक्रमेण[1] क्षेपं क्षिपेत् ॥ ४५ ॥

एवं हि कोटिवेधी रसराजः क्रामितो[2] भूत्वा ।
पुंस्त्वादेरुच्छ्रायप्रदो भूत्वा[3] भोगान्दत्ते ॥ ४६ ॥

पुंस्त्वाद्यान्[4] आकाशगमनपर्यन्तान् भोगान्ददातीत्यभिप्रायः॥ ४६ ॥

अभ्रकमाक्षिककनकं नागयुतं मिलितं[5] विधिना ।
सूते[6] पिष्टिः[7] कार्या दिव्यौषधियोगतः पुटिता ॥ ४७ ॥

पिष्टिविध्यन्तरमाह—अभ्रकमित्यादि । अभ्रकं प्रतीतं, माक्षिकं ताप्यं, कनकं हेम; नागयुक्तं नागेन सीसकेन युतं सहितं, विधिना कर्तव्योपदेशेन, एतत्सर्वं सूते मिलितं[8] सत् पिष्टिः कार्या[9] दिव्यौषधियोगतः पुटिता पिष्टिः कार्या इति ॥ ४७ ॥

षड्गुणगन्धकदाहः शिलया नागं समुत्तार्य ।
तारे हेमाकृष्टिर्मिलिता स्यात्षोडशांशेन ॥ ४८ ॥

तारे हेमाकृष्टिमाह—षडित्यादि । पूर्वोक्तायां पिष्ट्यां षड्गुणगन्धकदाहः कार्यः, पुनः[10] षड्गुणशिलया कृत्वा नागं समुत्तार्य सीसकमपहाय, सा निष्पन्ना पिष्टी षोडशांशेन तारे रूप्ये मिलिता सती हेमाकृष्टिः स्यात्कनकोद्धारणं भवेत्, ताम्रनागादिषु धातुषु हेम स्थितमेव, तत् आकृष्टिशब्दो युक्तः ॥ ४८ ॥

माक्षिकनिहतं शुल्बं शिलया निहतं[11] च नागतुल्यांशम् ।
पुटितं जम्बीररसैः सैन्धवसहितं पचेत्स्थाल्याम् ॥ ४९ ॥
तच्चूर्णं घृतमधुकटङ्कणसहितं च गुप्तमूषायाम् ।
तारे त्रिगुणं व्यूढं हेमाकृष्टिर्भवेद्दिव्या ॥५०॥

---

१ क्षेपकमेण च क्षे० ख.। क्षेपे क्रमेण च क्षेपे क्षेपेत् ग.। २ क्रामतो ग.। ३ भूत्वा विपुलान् भो० ख. ग. । ४ कथं आद्यं पर्यन्तं खेचरं यथा स्यात्तथा आकाशगमनपर्यन्तं ग. । ५ मेलितं ग. । ६ सूतः ख.ग. ७ पिष्टी ग. । ८ मिलति सति ख. ग. । ९ कार्या पुनर्दि० ख. ग. । १० पुनः पुनः ख. ग. । ११ सहितं ख. ग. ।

नागमारणविधानमाह—माक्षिकेत्यादि । माक्षिकेण निहतं मारितं यत् शुल्बं, शिलया मनःशिलया नागं च निहतं मारितं, उभयं तुल्यांशं समभागं कार्यं, पुनर्जम्बीररसैः जम्बीरद्रावैः सैन्धवसहितमुभयं पुटितं भावितं सत्पचेद्वह्निना पक्वं कुर्यात् । क्व[1] ? स्थाल्यां मृद्भाजने इत्यर्थः ॥ ४९ ॥ ५० ॥

शुल्बं बलिना निहतं तीक्ष्णं दरदेन निहतसमभागम् ।
एकीकृत्वा पुटयेत्पचेन्मातारसेनैव[2] ॥ ५१ ॥

नागे तारे हेमाकृष्टिमाह—शुल्बमित्यादि । बलिना गन्धकेन, निहतं सत् समभागं तुल्यांशं, 'कुर्यात्' इति शेषः । उभयमेकीकृत्य संमिश्र्य, मातारसेनैव नारीक्षीरेण पुटयेत् पचेदिति श्लोकार्थः ॥५१॥

तारे व्यूढं त्रिगुणं मार्जाराक्षनिभं भवेत्तच्च ।
लिप्तं रसेन पुटितं हेमार्धेन मात्रया तुल्यम् ॥ ५२ ॥

हेमाकृष्टेर्विधानमाह-तारे इत्यादि पूर्वोक्तं चूर्णं शुल्बजं तीक्ष्णजं वा[3] तारे त्रिगुणं व्यूढं वाहितं सत्, मार्जाराक्षसंनिभं ओतुनेत्राभं तारं भवेत् । हेमार्धेन मात्रया ताराधभागेन परिमाणेन हेम्ना तुल्यमन्यूनाधिकं; रसेन पयसा ॥ ५२ ॥

लिप्तं तदनु पुटितं नागं हि रसेन पादयुक्तेन ।
खर्परकस्थं कृत्वा कार्यं विधिना दृढं ताप्यम् ॥ ५३ ॥

पुनर्नागविधानमाह—लिप्तमित्यादि । त्रिगुणं यथा स्यात्तथा[4], पादयुक्तेन रसेन चतुर्थांशसहितसूतेन सह, नागं सीसकं, खर्परकस्थं मृद्भाजनखण्डास्थितं कृत्वा, विधिना रसज्ञोपदेशेन, दृढं[5] ताप्यं वह्नियुतं सत् निहतं कुर्यादिति वाक्यार्थः ॥ ५३ ॥

निर्गुण्डीरसभावितपुटितं शिलया[6] वर्तितं[7] श्लक्ष्णम् ।
तावन्मृदितपुटितं[8] निरुत्थभावं व्रजेद्यावत् ॥ ५४ ॥

तच्चाह—निर्गुण्डीत्यादि । पक्वं नागचूर्णं श्लक्ष्णं श्रेष्ठविधानं यथा स्यात्तथा शिलया वर्तितं सत्[9] निर्गुण्डीरसभावितपुटितं पूर्वं भावितं

---

१ कस्यां ग. । २ मातृरसे० ख. । ३ ख. ग. पुस्तके नास्ति । ४ ०था शिलया पा० ख. ग. । ५ दृढताप्यं ख. । दृढताप्यं सत् ग. । ६ शिलया च इति पठनीयम् । सं० । ७ वर्तितं दृढं ग. । ८ ०न्मार्दितं० इति पठनीयम् । सं । ९ तत् ग. ।

घर्मपुटितं पश्चात्पुटितं वह्निपुटितं कुर्यात् । पुनर्यावन्निरुत्थभावं अशरीरत्वं व्रजेत् तावन्मृदितपुटितं मर्दितपाचितं कुर्यादित्यर्थः ॥ ५४ ॥

तारे तन्निर्व्यूढं यावत्पीतं भवेद्रुचिरम् ।
हेमसमेन च मिलितं मात्रातुल्यं भवेत्कनकम् ॥ ५५ ॥

तच्चाह—तारे इत्यादि । तन्निरुत्थनागचूर्णं यावत्पीतं पीतवर्णं तारं भवेत् तावद्धारं[1] निर्व्यूढं कुर्यात् । पुनर्हेमसमेन कनकतुल्यांशेन मात्रातुल्यं मिलितं सत् रुचिरं मनोरमं कनकं सर्वं भवेदित्यर्थः ॥ ५५ ॥

ताप्यं चाङ्गुलिसंज्ञं चूर्णं कृत्वा तदन्तरे[2] दत्त्वा ।
शुल्बस्य गुप्तमूषा कार्या पुटिताथ च ध्माता ॥ ५६ ॥

ताप्यविधानमाह—ताप्यमित्यादि । अङ्गुलिसंज्ञं[3] ताप्यं स्वर्णमाक्षिकं चूर्णं कृत्वा, तदन्तरे[4] तच्चूर्णमन्तरे मध्ये दत्त्वा, शुल्बस्य ताम्रस्य गुप्तमूषा अन्धमूषा कार्या, तत्र नले इत्यभिप्रायः । सा मूषा पुटिता ध्माता कार्येति विधानमुक्तम् ॥ ५६ ॥

हेम्ना मिलितं विधिना मात्रातुल्यं भवत्येव ।
पादादिजीर्णसूते लिह्यात्[5]पत्राणि हेमकृष्टीनाम् ॥ ५७ ॥

तच्चाह—हेम्नेत्यादि । पक्कं यन्माक्षिकचूर्णं तद्धेम्ना कृत्वा पादादिजीर्णसूते पादादिना पादार्धसमानादिना जीर्णो योऽसौ सूतः तस्मिन् हेमकृष्टीनां पत्राणि कलुषकनकानां पत्राणि लिह्यात्[6] क्रामणयोगेन लेपयेदित्यागामिश्लोकात् ॥ ५७ ॥

क्रामणयोगेन ततो विलिप्य विधिना निधाय तुल्याधः ।
पश्चाद्धेम्ना सहितं ध्मातं मूषोदरे समावर्त्य[7] ॥ ५८ ॥

तच्चाह—क्रामणेत्यादि । ततो रसलेपानन्तरं, क्रामणयोगेन कुनटीमाक्षिकविषमित्यादिनोक्तेन[8] विलिप्य तुल्याधः तुल्यं यथा स्यात्तथा अधोभागे निधाय, मूषोदरे ध्मातं कुर्यात् । पुनः पश्चाद्धेम्ना कनकेन सहितं आवर्त्य[9] ध्मातं कुर्यात् ॥ ५८ ॥

---

१ तावत्तारं ख. ग. । २ तदनन्तरं ग. । ३ अङ्गुलिसमं ख. । ४ ततोऽनन्तरं तच्चूर्णं तारे दत्त्वा, रलयोरैक्यात् ले इत्यर्थः ख. ग. । ५ लिप्ते प० ख. । लिप्त्वा प० ग. । ६ लिप्ता ख. । लिप्त्वा ग. । ७ समावृत्य ग. । ८ ०मित्यादिना ख. ग. । ९ आवृत्य ग. ।

यन्त्रं हण्ड्यां पक्वं पञ्चमृदावाप्य पुटपक्वम्।
वक्ष्यामि च लेपविधिं क्रामति[1] च सूतो यथा* हि पत्रेषु।
रञ्जति[2] येन[3] विधिना समासतः सूतराजस्तु॥ ५९॥

तच्चाह—यन्त्रमित्यादि। वा यन्त्रं पञ्चमृदा वल्मीकमृत्, गैरिकं, खटिका, सैन्धवं, इष्टिका चेति[4] पञ्चमृदः, तया कृत्वा, हण्ड्यां स्थाल्यां पक्वं कार्यम्। अथ पुटपक्वं गजपुटादिना पाच्यमित्यर्थः[5]। लेपनविधिं वक्ष्यामि यथा पत्रेषु लेपः कार्यः, पुनर्यथा पत्रेषु क्रमति स्वगुणान् प्रकाशयति, पुनर्येन विधिना रञ्जनं[6] रागं ददाति, समासतः संक्षेपतः[7], विधिना विधानतः, सूतराज[8] एवंविधो भवेत् तमुपायं वक्ष्यामीति[9]॥ ५९॥

कृत्वाऽऽलक्तकवस्त्रं लिप्तमनुस्नेहमुपरि चूर्णेन।
अवचूर्णितं तु कृत्वा गन्धकशिलया विधानेन॥ ६०॥

अथ लेपक्रामणं रञ्जनविधानमाह—कृत्वालक्तकवस्त्रमित्यादि। प्रथमं आलक्तकं वस्त्रं अलक्तेन रञ्जितं यद्वस्त्रं तदालक्तकं, अनु पश्चात्, स्नेहं कङ्गुण्यादीनां तैलं, लिप्तं कार्यं, तत्तैललिप्तवस्त्रोपरि वक्ष्यमाणौषधानां चूर्णेन अवचूर्णनं कुर्यात्, तैललिप्तवस्त्रं गन्धकशिलया कृत्वा तदुपरि दातव्यं दर्शयति॥ ६०॥

तदुपरि भूतं च दत्वा गन्धकशिलाचूर्णं च सूतवरे।
पश्चाद्वर्तिः कार्या पात्रे धृत्वाऽयसे च समे॥ ६१॥

पुनस्तदुपरि, गन्धकशिलाचूर्णोपरि, भूतं दत्त्वा, पुनर्गन्धकशिलाचूर्णं सूतवरे सूतराजोपरि दत्त्वा, पश्चात्तत्करणानन्तरं, वर्तिः कार्या, सा वर्तिरायसे लोहमये, समे समभूमौ पात्रे धृत्वा तत्रोपरि कार्या॥ ६१॥

---

१ क्रामति सू० ख. ग.। २ रञ्जयति ग.। ३ तेन ख. ग.। येन च इति पठनीयम्। सं०। ४ सममिति ग.। ५ भाव्यमित्यर्थः ख. ग.। ६ रञ्जित ख. ग.। रञ्जति इति साधु। ७ संक्षेपविधानतः सू० ख. ग.। ८ सूतराजस्य ग.। ९ मीति षड्रसानां समर्थः ग.।

* सम्मेल्य पठनीयं पदमिदं यथाहिपत्रेषु इति। अहिपत्रेषु नागपत्रेषु सीसकपत्रेष्वित्यर्थः। इति जयदेवः॥

दीपं प्रतिबोध्य ततस्तैलं दत्त्वा[1] ततः स्तोकम् ।
पाकं यामस्यार्धं स्वाङ्गे[2] शीतं ततः कार्यम् ॥ ६२ ॥

विध्यन्तरं दर्शयति—दीपमित्यादि । ततो वर्तेः[3] पात्रोपरि करणानन्तरं, दीपं प्रतिबोध्य प्रज्वाल्य, ततो वारंवारं स्तोकमल्पं तैलं दत्त्वा, यावद्यामस्य प्रहरस्य अर्धं स्यात्तावत्पाकं 'कुर्यात्' इति शेषः । ततोऽनन्तरं तत्पतितं तैलं स्वाङ्गशीतं कार्यं, अङ्गे तैलद्रवरूपे शरीरे यथास्वं स्वयमेव शीतं यथा स्यात्तथा कार्यम् ॥ ६२ ॥

गृह्णीयादथ सूतकृष्टीं[5] लिप्ता[6] ततस्तेन ।
क्रामणयोगैर्लिप्त्वा[7] पुटिता सा हेम्नि निर्ध्माता ॥ ६३ ॥

तच्चाह—गृह्णीयादित्यादि । अथ शीतकरणानन्तरम् । सूतकृष्टीं च गृह्णीयात् 'कर्मवित्' इति शेषः । ततोऽनन्तरं सा सूतकृष्टी तेन पत्रेण लिप्ता सती क्रामणयोगैर्लिप्त्वा[8], हेम्नि सुवर्णे निर्ध्माता कार्येति ॥६३॥

अथवा दरदशिलालैर्गन्धकमाक्षीकपक्वमृतनागैः[9] ।
कङ्कुष्ठप्रवालसहितैः पिष्टैश्च कङ्गुणीतैले ॥ ६४ ॥

विध्यन्तरमाह—अथवेत्यादि[9] । दरदो हिंगुलः, शिला मनोह्वा, आलं हरितालं, तैः, गन्धकः प्रतीतः, माक्षिकं यत्पक्वं सिन्दूरीकृतं, मृतनागश्च, तैः । पुनः कंकुष्ठप्रवालसहितैः कंकुष्ठं विरङ्गं, प्रवालं विद्रुमं, ताभ्यां सहितैः । पुनरेतैः कंगुणीतैले ज्योतिष्मतीतैले[10] पिष्टैश्चूर्णीकृतैः, मध्ये सूतो[11] युक्तः कार्यं इत्यग्रिमश्लोकसंबन्धात्[12] ॥६४॥

मध्ये सूतो[13] युक्तो मृदितः खल्वे तथायसे विधिना ।
संस्वेद्य वंशनलिकां दोलायन्त्रे स्वेदितं[14] त्रिदिनम् ॥ ६५ ॥

तच्चाह—मध्ये इत्यादि । पूर्वोक्तैरौषधैः कृत्वा, मध्ये औषधान्तः, सूतो[15] युक्तः कार्यः । पुनर्मर्दयित्वा वंशनलिकां रिक्तोदरां प्रति संस्वेद्य

---

१ दग्ध्वा ख. ग. । २ स्वाङ्ग ख. । ३ वर्तिः ग. । ४ प्रज्वाल्य सूतः ततो ख. ग. । ५ सूतः कृष्टीं ग. । ६ लिप्त्वा ख. ग. । ७ लिप्त्वा ग. । ८ लिप्त्वा च ख. ग. । ९ ०दि । दरदशिलालैः दरदो ख. । ०दि । दरदशिलालगन्धाः प्रतीताः ग. । १० ०तीस्नेहे ख. ग. । ११ सूतकयु० ग. । १२ सम्बन्धः ग. । १३ सूतक ख. ग. । १४ स्वेदयेत् ख. ग. । १५ सूतयुक्तः ग. ।

दिनत्रयं दोलायन्त्रेण स्वेदितं कुर्यादित्यर्थः ॥ ६५ ॥

एतैर्लिप्त्वा कृष्णैः पत्रं पूर्वोक्तविधानेन ।
नागं दत्त्वा प्रकटं स्तोकं स्तोकं क्रमेणैव ॥ ६६ ॥

तच्चाह लिप्त्वेत्यादि । एतानि स्वेदितौषधानि संयुक्तानि तैः, कृष्णैः कृष्णवर्णैः, पूर्वोक्तविधानेन सूतकृष्टीविधानेन पत्रं लिप्त्वा, पुनः प्रकटं यथा स्यात्तथा स्तोकं अल्पमल्पं क्रमेण नागं दत्त्वा, कनकं जायते इत्यग्रिमश्लोकसंबन्धः ॥ ६६ ॥

भवति हि कनकं दिव्यमक्षीणं देवयोग्यं च ।
एवं जारितसूते सकलाः खलु हण्डिकाः सर्वाः ॥ ६७ ॥

एवं कृते सति अक्षीणं अक्षयं, दिव्यं प्रवरं, देवयोग्यं देवा इन्द्रादयस्तद्योग्यं कनकं भवति । युक्तोऽयमर्थः । एवं जारितसूते जारितकर्मकृते रसे, खलु निश्चितं, सर्वा हण्डिकाः सर्वे धात्वाद्याः, सकलाः सप्रसवाः स्युरित्यर्थः ॥ ६७ ॥

निर्बीजं समजीर्णे पादेनैव षोडशांशेन ।
अर्धेन पादयोगं पादेनैकेन तुल्यकनकं च* ॥ ६८ ॥

विशेषमाह—निर्बीजमित्यादि । निर्बीजं यथा स्यात्तथा, समजीर्णे पादेन तुर्यांशेन फलं ददाति; तथा अर्धेन जीर्णेन षोडशांशेन फलं ददाति; च पुनस्तदर्धेन जीर्णेन तत्पादयोगं, तत्पादेन एकेन तत्पादयोगं फलं ददातीति सर्वत्र वाच्यम् । तुल्यकनकं च जीर्णे पूर्णं फलं ददातीति ॥ ६८ ॥

ताराकृष्टिं वक्ष्ये मृतवङ्गं तालकेन तुल्यांशम् ।
लाम्बितमथ निर्ध्मातं ताम्रं तारच्छविं वहति ॥ ६९ ॥

---

१ ०त्रयं तदा दो० ग. । २ "एतैः" इति ग. पुस्तके नास्ति । ३ विधानतस्तेन ग. । ४ ०तौषधसंयु० ख. ग. । ५ भागं ख. ग. । ६ तत्पादेनैकेन ख. ग. । ७ ग. पुस्तके नास्ति । ८ जीर्णे ग. । ९ तालतुल्यांशम् ग. ।

*आयुर्वेदप्रकाशे—निर्बीजे समजीर्णे पादोने षोडशांशतया । अर्धेन पादकनकं पादेनैकेन तुल्यकनकं च ॥ इति पाठान्तरमुपलभ्यते ।

अथ ताराकृष्टिमाह—हेमाकृष्ट्यनन्तरं ताराकृष्टिं वक्ष्ये अहं कविः कथयामि, मृतवङ्गं मारितं वङ्गं, तालकेन हरितालेनेति । अथ ताम्रं तुल्यांशं लम्बितं विस्तीर्णं यथा स्यात्तथा निर्ध्मातं सत् तारच्छविं वहति रूप्यद्युतिं प्राप्नोतीत्यर्थः ॥ ६९ ॥

पश्चान्नागं देयं प्रकाशमूषासु निर्मलं यावत्।

तावद् ध्मातं विधिना सुनिर्मलं निस्तरङ्गं तु ॥ ७० ॥

तच्चाह—पश्चादित्यादि । पश्चाद्वङ्गताम्रप्रयोगानन्तरं, प्रकाशमूषासु यावत् निर्मलं मलवर्जितं स्यात्तावन्नागं देयं, पुनर्यावन्निर्मलमुज्ज्वलं, निस्तरङ्गं नागोर्मिवर्जितं स्यात् तावद्विधिना ध्मातं कुर्यादित्यर्थः ॥७०॥

तालशिलासार्जिकाभिः[1] सैन्धवलवणेन *नयनहितसहितैः ।

एकैकं सहितं वा वेधं दत्त्वा[2] पुनः शुल्बे ॥ ७१ ॥

विशेषमाह—तालेत्यादि । तालं हरितालं, शिला मनोह्वा, सार्जिका प्रतीता, ताभिः; सैन्धवं च तत् लवणं च तेन, नयनहितसहितैः एतैः कृत्वा एकैकं पृथक्त्वेन वा सहितमेकत्वेन पुनः शुल्बे ताम्रे वेधं प्रति-दध्यादिति[3] ॥ ७१ ॥

छगणं माहिषतक्रं स्नुहीक्षीरेण[4] सर्पिषा[5] क्रमशः ।

सगुडदुग्धमधुविमिश्रैः[6] क्रमशो वेधे[7] निषेकश्च ॥ ७२ ॥

तारवेधनिषेकान्याह—छगणमित्यादि । छगणं वनोत्पलं, माहिषं तक्रं महिष्याः इदं माहिषं, स्नुहीक्षीरेण सेहुण्डदुग्धेन सह, पुनः सर्पिषा घृतेन सह, गुडदुग्धमधुभिर्मिश्रैः[8] मिलितं[9] कृत्वा क्रमशो[10] वेधकर्मणि निषेकः कार्यः ॥ ७२ ॥

काञ्ची ब्राह्मी कुटिलं तालकं[11] समभागयोजितं ध्मातम्।

शुल्बं विद्धमनेन[12] तु ताराकृष्टिर्भवेद्दिव्या ॥ ७३ ॥

ताराकृष्टिमाह—काञ्चीत्यादि । काञ्ची स्वर्णमाक्षिकं, ब्राह्मी सोमोह्वा[14],

१ ०सार्जिकया ख. ग. । २ तया ख. ग. । ३ दद्यादिति ग. । ४ स्नुहीक्षीरे ख. ग. । ५ सर्पिषोः ग. । ६ सगुडं दुग्धविमिश्रैः ख. ग. । ०मधुमिश्रैः इति पठनीयम् । सं० । ७ वध ख. । वेधे ग. । ८ गुडदुग्धविमिश्रैः ख. । गुडदुग्धमिश्रितैः ग. । ९ ख. ग. पुस्तके नास्ति । १० क्रमशो वेधे वे०ग. । ११ तालकसम० ख.ग. । १२ विशुद्धमनेन ख.ग. । १४ मनोह्वा ख. ग. । * नयनहिता त्रिफला ।

कुटिलं सीसं, तालकं प्रतीतं, एतत्समयोजितं समांशमेलितं तत् ध्मातं कुर्यात्, पुनरनेन काञ्च्यादिगणेन विद्धं शुल्बं दिव्या मनोरमा ताराकृष्टिर्भवेत् ॥ ७३ ॥

एवं ताराकृष्टिर्लिप्त्वा[2] विद्धा रसेन सारितेन[3] ।
तारं करोति विमलं लेपं वा पादजीर्णादि ॥ ७४ ॥

ताराकृष्टिविधानमाह—एवमित्यादि । एवं उक्तविधानेन, सारितेन सारणाकर्मकृतेन, लिप्त्वा विद्धा सती ताराकृष्टिर्भवेत् । पुनरियं ताराकृष्टिः तारं विमलं मलवर्जितं करोति, वा पादजीर्णादि पादेन जीर्णं यस्मिन् आदिशब्दादर्धसमग्रहणं कार्यं, तत् लेपमिति ॥ ७४ ॥

इति मिश्रीकृतविद्धं क्रमितं त्वथ मातृकातुल्यम् ।
तारदलं भवति[4] च्छेदनताडननिकषैश्च निर्दोषम् ॥ ७५ ॥

विशेषमाह—इतीत्यादि । इति पूर्वोक्तविधानेन, मिश्रीकृतं मिलितं, विद्धं क्रमितं मातृकातुल्यं समांशं सत् तारदलं रूप्यपत्रं भवति, तद्रूप्यदलं छेदनताडननिकषैः छेदनं खण्डनं, ताडनं घनघातः, निकषं शिलोपरि परीक्षणं, तैरिति; तायैश्च निर्दोषं तद्भवति ॥ ७५ ॥

एवं वेधविधानं शास्त्रविधिज्ञेन कर्मकुशलेन ।
ज्ञात्वा गुरूपदेशं कर्तव्यं कर्मनिपुणेन[5] ॥ ७६ ॥

इति परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पाद-
विरचिते रसहृदयाख्ये तन्त्रे वेधविधाना-
त्मकोऽष्टादशोऽवबोधः ॥ १८ ॥

एवं अमुना प्रकारेण, शास्त्रविधिज्ञेन शास्त्रस्य विधिं जानातीति सः तेन, कर्मनिपुणेन संस्कारप्रवीणेन कुशलेन कर्त्रा, गुरूपदेशं गुरुरुक्तलक्षणो ग्रन्थादौ, तस्य उपदेशं ज्ञात्वा, वेधविधानं कर्तव्यमित्यर्थः ॥ ७६ ॥

इति श्रीमत्कुरलवंशपयोधिसुधाकररामेश्वरमहेशात्मजश्रीचतुर्भुज-
विरचितायां मुग्धावबोधिन्यां रसहृदयटीकायां वेधवि-
धानात्मकोऽष्टादशोऽवबोधः ॥ १८ ॥

---

१ वङ्गं ग. । २ लिप्ता ग. । ३ सारितेन ग. । ४ भवति ख. ग. । ५ कर्मकर्त्रा ग. ।

# अथैकोनविंशतितमोऽवबोधः ।

अथ भक्षणविधानमभिधास्यते ।

इति रसराजस्य विधौ वेधविधानं प्रसङ्गतः प्रोक्तम् ।
अधुना प्रोक्तानपि वक्ष्यामि रसायने योगान् ॥ १ ॥

अथ भक्षणविधानमाह—इतीत्यादि । रसराजस्य विधौ रसेन्द्रकर्मविधाने, वेधविधानं प्रसङ्गतः प्रस्तावतः प्रोक्तं, न तु स्वप्रज्ञासमम् । अधुना प्रोक्तानपि अपिशब्दादनुभूतानपि, रसायने जराव्याधिनाशनविधौ, योगान् द्रव्यसमुदायात्मकान्, वक्ष्यामि कथयामीत्यर्थः ॥ १ ॥

आदौ प्रातः प्रातः सैन्धवयुक्तं घृतं पिबेत्त्रिदिनम् * ।
तदनु क्वाथं त्रिदिनं युञ्जीयात्केतकीतनुजम् ॥ २ ॥

कायशोधनमाह—आदावित्यादि । प्रथमं प्रातः प्रातः प्रत्यूषे, त्रिदिनं सैन्धवमिलितं घृतमाज्यं पिबेत् । अन्यसंयोगमाह—तदनु घृतसैन्धवानन्तरं, केतकीतनुजं क्वाथं केतक्याः तनुः शरीरं तस्माज्जातं केतकीमूलसंभवमित्यर्थः, 'अङ्गेऽप्यनुक्ते विहितं तु मूलं' इति न्यायात्, त्रिदिनं प्रयुञ्जीयादित्यर्थः ॥ २ ॥

विधिना स्वेद्यो देहः कर्तव्यो वार्तिकेन्द्रेण ।
क्वथितं कटुरोहिण्याः संशोधनमनुप्रयुञ्जीत ॥ ३ ॥

विध्यन्तरमाह—विधिनेत्यादि । ततो विधिना स्वेदविधानेन, देहः शरीरं वार्तिकेन्द्रेण रससंप्रदायविदा स्वेद्यः स्विन्नः कर्तव्यः । अन्यत्किं ? कटुरोहिण्याः तिक्तायाः क्वथितं प्रसाधितं सम्यक् शुद्धिकरणं अनुप्रयुञ्जीत स्वेदानन्तरमित्यभिप्रायः ॥ ३ ॥

तदनु च शुद्धादूर्ध्वं श्लेष्मान्ते रेचिते सकलम् † ।

---

१ प्रक्रान्तानपि ख. ग. । सुपाठश्चायम् । २ तरुजम् ख. ग. । ३ स्वेद्यं शरीरं कर्तव्यं ख. ग. ।

* स्नेहनार्थमयं योगः ।

† स्नेहनस्वेदन रेचनानन्तरमेव रसायनौषधं गुणकरम् । उक्तञ्च स्निग्धस्विन्नविरिक्तं यन्नीरुजं सिद्धभेषजैः । एतत्क्षेत्रं समासेन रसबीजार्पणक्षमम् ।

यावकपथ्यं त्रिदिनं घृतसहितं तत्प्रयुञ्जीत ॥ ४ ॥

विध्यन्तरमाह—तदित्यादि । तदनु कटुकरोहिणीसेवनानन्तरं, शुद्धादूर्ध्वं यथा स्यात्तथा श्लेष्मान्तरेचिते सति यथा श्लेष्मणोऽन्तः स्यात्तथा रेचिते सति, त्रिदिनपरिमाणयावकपथ्यं घृतसहितं प्रयुञ्जीतेति ॥ ४ ॥

पुनरपि च पानयोगं वक्ष्यामि च सकलभुवनहितकृतये ।

पीत्वा प्रथमे यामे चोष्णोदकसममिदं चूर्णम् ॥ ५ ॥

विध्यन्तरमाह—पुनरपीत्यादि । पुनरपीति यावकपथ्ययोगानन्तरं, च पुनः, पानयोगं वक्ष्यामि, किमर्थं ? सकलभुवनहितकृतये समस्तसंसारहितकरणाय, इदं वक्ष्यमाणं, चूर्णं पथ्याद्यं, उष्णोदकसमं तप्तजलेन सह, प्रथमयामे प्रथमप्रहरान्तः, पीत्वा शुद्धशरीरो भवेदित्यागामिश्लोकसंबन्धात् ॥ ५ ॥

पथ्यासैन्धवधात्रीमरिचवचागुडविडङ्गरजनीनाम् ।

शुण्ठीपिप्पल्योरपि चूर्णं त्रिदिनं प्रयुञ्जीत ॥ ६ ॥

शोधनाय चूर्णमाह-पथ्येत्यादि । पथ्या हरीतकी, सैन्धवं प्रतीतं, धात्री आमलकं, मरिचमूषणं, वचा उग्रगन्धा, गुडः प्रतीतः, विडङ्गं कृमिघ्नं, रजनी हरिद्रा; शुण्ठीपिप्पल्योरपीति शुण्ठी नागरं, पिप्पली मागधी, आसां औषधीनां चूर्णं त्रिदिनं प्रयुञ्जीत । उष्णजलसममिति ज्ञेयम् ॥ ६ ॥

अमुना शुद्धशरीरः परिहृतसंसर्गदोषबली ।

पीत्वा पयसा सहितं यावकममुना भवेच्छुद्धः ॥ ७ ॥

अमुनेत्यादि । अमुना वक्ष्यमाणविरेचनेन यावकादिना शुद्धशरीरः सन्, परिहृतसंसर्गदोषबली भवति संसर्गेण ये दोषाः शरीराभ्यन्तरास्ते संसर्गदोषाः, ते परिहृताः जिता येन सः परिहृतसंसर्गदोषः तेन बली बलयुक्तः; दोषनिवृत्तौ गुणप्रवृत्तिरित्यवश्यम् । किं कृत्वा परिहृतदोषः ? अमुना पयसा उष्णोदकेन यावकं अलकं (?), पीत्वा शुद्धो भवेदित्यर्थः ॥ ७ ॥

अकृतसत्त्रीकरणे रसायनं यो नरः प्रयुञ्जीत ।

तस्य क्रामति न रसः [1]स रसः सर्वाङ्गदोषकृद्भवति* ॥ ८॥

संशोधनस्याकरणे दोषमाह—अकृतेत्यादि। यो नरः पुमान्, अकृतक्षेत्रीकरणे 'देहे' इति शेषः, न कृतं अकृतं क्षेत्रीकरणं यस्मिन् तस्मिन्सति, रसायनं जराव्याधिविनाशनौषधं, प्रयुञ्जीत तस्य पुंसो रसो न क्रामति स्वगुणान्न प्रकाशयति; तर्हि किं ? सर्वाङ्गदोषकृद्भवति बाहुचरणादिषु षट्स्वङ्गेषु विकारकृत् स्यात् ॥ ८ ॥

इति शुद्धो जातबलः शाल्योदनयावकाख्यमुद्गरसैः।

क्षेत्रीकृतनिज[2]देहः कुर्वीत रसायनं विधिवत्† ॥ ९ ॥

रसायनाधिकारत्वमाह-इतीत्यादि । पूर्वोक्तविधानेन शुद्धः सन् यो जातबलो भवति, स क्षेत्रीकृतनिजदेहः अक्षेत्रं क्षेत्रं क्रियत इति क्षेत्रीकृतो निजदेहः शरीरं येन सः, मतिमान् रसायनं विधिवत्प्रकुर्वीत। कैः जातबलः ? शाल्योदनं च यावकाख्यं च मुद्गाश्च तैः ॥ ९ ॥

सुरतरुतैलघृ[3]तमधुधात्रीरसपयांसि निर्मथ्य।

पीत्वा विशुद्धकोष्ठो भव[4]ति पुमानन्तरितशुद्धः ॥ १० ॥

विध्यन्तरमाह-सुरतर्विल्यादि। अन्तरितशुद्धः अन्तरितं शुद्धं यस्य सः ग्रहणीरोगादिवर्जित इत्यर्थः, एतानि औषधानि निर्मथ्य पीत्वा, विशुद्धकोष्ठो भवति विशुद्धं मलवर्जितं कोष्ठं उदरं यस्येत्येवंविधो भवति। तानि कानि ? सुरतरुतैलेत्यादीनि सुरतरुर्देववृक्षः, तत्तैलं पेषणतैलमित्यर्थः, घृतं आज्यं, मधु क्षौद्रं, धात्रीरसः आमलकीसलिलं, पयो दुग्धं, एतानि सर्वाणि निर्मथ्य एकीकृत्येत्यर्थः ॥ १० ॥

---

१ "स रसः" इति ख.पुस्तके नास्ति। २ निर्देहः ख. ग.। ३ घृतं ख. ग.। ४ भवति हि पुमा० ख. ग.।

* इति शुद्धो जातबलः शाल्योदनजाङ्गलादिमुद्गरसैः। क्षेत्रीकृतनिजदेहः कुर्वीत रसायनं मतिमान्। इति आयुर्वेदप्रकाशस्थः पाठः।

† अक्षेत्रीकरणे सति रसायनं यो नरः प्रयुञ्जीत। तस्य क्रामति न रसः सर्वाङ्गदोषकृद्भवति ॥ इति आयुर्वेद प्रकाशस्थः पाठः। अन्यत्राप्युक्तं अक्षेत्रीकरणे सूतोऽप्यमृतोऽपि विषं भवेत्। फलसिद्धिः कुतस्तस्य सुबीजस्योषरे यथा ॥ क्षेत्रीकृतनिजदेहः कुर्वीत रसायनं मतिमान्। विधिना पथ्यविधानादमरदेहतुल्यदेहः स्यात् ॥

मासेन कान्तिमेधे द्वाभ्यां प्रशमयति दोषनिकरं च ।
मासत्रितयेन पुनः स्यादमरवपुर्महातेजाः ॥ ११ ॥

एतदौषधभक्षणगुणं मासक्रमेणाह—मासेनेत्यादि । अस्य औषधस्य मासेन मासप्रमाणेन भक्षणात्कान्तिर्भवति मेधा चेति, द्वाभ्यां द्विमासाभ्यां दोषनिकरं गदसमुदायं प्रशमयति शान्तिं नयति; पुनर्मासत्रितयेन त्रिमासप्रमाणेन स्यात् स्वसामान्यशरीरात् अमरवपुर्देवशरीरो, महातेजाः दीप्तिमान् स्यादित्यर्थः ॥ ११ ॥

सुरदारुतैलमाज्यं त्रिफलारससंयुतं च समभागम् ।
पीतं तत्सप्ताहान्नयनविकारं शमं नयति ॥ १२ ॥

योगान्तरमाह—सुरदार्वित्यादि । सुरदारुतैलं देवदारुतैलं, आज्यं घृतं, त्रिफलारससंयुतं त्रिफलाया रसेन द्रवेण संयुतं सहितं, च पुनः समभागं तुल्यांशं, तत्पीतं सत् सप्ताहात्सप्तदिनप्रमाणतः, नयनविकारं नेत्रसंभवं रोगं, शमं नयति शान्तिं प्रापयति ॥ १२ ॥

सुरतरुतैलं सघृतं पीत्वा शाल्योदनं च सक्षीरम् ।
जीर्णाहारे भुक्त्वा हरति हि सकुष्ठान् पीनसादींश्च ॥ १३ ॥

योगान्तरमाह—सुरतरुतैलमित्यादि । देवदारुतैलं सघृतं साज्यं, एतदुभयं पीत्वा, सक्षीरं शाल्योदनं भुक्त्वा षष्टिकोदनमित्यभिप्रायः, पुनर्जीर्णाहारे प्रतिदिनं दिनान्तर्वारद्वये वेदितव्यम् । च पुनः सकुष्ठान् कुष्ठैः सह वर्तन्ते एवंविधान् पीनसादीन् रोगान् हरति दूरीकरोति ॥ १३ ॥

घृतसहितः पित्तकृतांस्तैलयुतो वातसंभवान् रोगान् ।
गुडसहितो मधुना वा कफजान् हन्त्यमरदारुरसः ॥ १४ ॥

योगान्तरमाह—घृतसहित इत्यादि । अमरदारुरसो देवदारुजलं, घृतसहित आज्यमिश्रितः, पित्तकृतान् रोगान् हरति नाशयति । पुनस्तैलयुतस्तैलेन मिश्रितो देवदारुरसः, वातसंभवान् रोगान् हन्ति । पुनर्गुडसहितः वा मधुना क्षौद्रेण सहितो देवदारुरसः, कफजान् रोगान् हन्तीति वाक्यार्थः ॥ १४ ॥

वर्जितकाञ्जिकशाकं पयसा शाल्योदनं च युञ्जीत ।
द्विचतुःषट्पलमानं मात्राऽधममध्यमज्येष्ठाः ॥ १५ ॥

---

१ कान्तिमेधा ख. ग. । २ प्रशमति ख. ग. । ३ "हि" इति ख. ग. पुस्तके नास्ति । ४ स कुष्ठांश्च ख. ग. । ५ द्विचतुः द्विः षट् ख. ग. ।

रसायने भोज्याभोज्यमाह[1]—वर्जितेत्यादि । वर्जितकाञ्जिकशाकं वर्जितं काञ्जिकं सौवीरं शाकं वास्तुकादि च यस्मिन् तत्तथा, पयसा क्षीरेण सह, शाल्योदनं भुञ्जीत । पुनः शाल्योदनं कियन्मानं? द्विचतुःषट्पलमानम् । अत्र मात्राऽधममध्यमज्येष्ठा द्विचतुःषट्पलप्रमाणा, अधममध्यमोत्तमबलेषु प्रयोज्येत्यर्थः ॥ १५ ॥

तदनु[2] पातनशुद्धं सूतकमारोटम[3]श्नीयात् ।

स्वेदनमूर्च्छोत्थापनपातनरोधाश्च निय[4]मश्च ॥ १६ ॥

अथ रसयोगमाह[5]—तदित्यादि । तदनु पथ्यमात्रोपयोगानन्तरं, पातनशुद्धं पातनेन शुद्धं सूतकं आरोटमेव सामान्यमेवाश्नीयात् भक्षयेत् । च पुनः स्वेदनमूर्च्छोत्थापनपातनरोधाश्च स्वेदनं च मूर्च्छा च उत्थापनं च पातनानि च निरोधश्चेति द्वन्द्वः, एते यद्यपि सन्ति नियमश्च यद्यप्यस्ति तथाप्यारोटः पातनेन स्यादित्यर्थः ॥ १६ ॥

अभ्रकसहितः पात्यो विधिना यावत्स्थिरो भवति ।

अथवा माक्षिकसहितः पात्यः सूतो विधानेन ॥ १७ ॥

प्रसङ्गतः पातनमाह—अभ्रकेत्यादि । सूतः अभ्रकसहितः गगनमिलितः सन् पात्यः । केन विधानेन? डमरुकयन्त्रादिना । पुनस्तावद्यावत्स्थिरो भवति । अथवा विध्यन्तरे, सूतो माक्षिकसहितः पात्यो विधानेन, अयमपि यावत्स्थिरो भवति ॥ १७ ॥

इत्यारोटः* सूतः क्षेत्रीकरणे नियुज्यते प्रथमम् ।

अथवा भस्म च कृत्वा बद्धो वा †कल्कयोगेन ॥ १८ ॥

रसायने सूतस्य आरोटादिविधानमाह—इतीत्यादि । आरोट इति पूर्वोक्तेन पातनकर्मणा ऊर्ध्वाधस्तिर्यग्भवेन साधित आरोटः, सः प्रथमं यथा स्यात्तथा रसायने जराव्याधिनाशने नियुज्यते इति ।

---

१ भोज्यपथ्यानाह ख. ग. । २ तदनु च पा० ख. ग. । ३ ०रोटमेवाश्नीयात् । ख.ग. । ४ नियमाश्च ख. ग. । ५ ०दिप्रयोगमाह ख.ग. ।

* आरोटलक्षणं यथा—सुशोधितो रसः सम्यगारोट इति कथ्यते । स क्षेत्रीकरणे श्रेष्ठः शनैर्व्याधिविनाशनः ॥

†बद्धो वा कल्कयोगेनेति कल्कबद्ध इत्यर्थः । तल्लक्षणं च-स्वेदाद्यैः साधितः सूतः कल्कत्वं समुपागतः । कल्कबद्धः स विज्ञेयो योगोक्तफलदायकः ॥

अथवा कल्कयोगेन रसादिसंभूतेन रसो भस्म कृत्वा द्विविधं भस्म ऊर्ध्वगं तलभस्म च; वर्णभेदेन षड्विधं; श्वेतं भस्म, पीतं भस्म, हरितं भस्म, रक्तं भस्म, कृष्णं भस्म, कर्बुरं भस्म, इति षड्विधं; तत्कृत्वा क्षेत्रीकरणे नियुज्यते प्रथमम् ॥ १८ ॥

माक्षिकशिलाजतुलोहचूर्ण[1]पथ्याक्षविडङ्गघृतमधुभिः ।

संयुक्तं रसमादौ क्षेत्रीकरणाय युञ्जीत ॥ १९ ॥

रसयोगमाह—माक्षिकेत्यादि । माक्षिकं ताप्यं, शिलाजतु प्रसिद्धं, लोहचूर्णं मारितमुण्डस्य रजः, पथ्या हरीतकी, अक्षो बिभीतकः, विडङ्गं कृमिघ्नं, घृतमाज्यं, मधु क्षौद्रं, एतैः संप्रयुक्तं रसं क्षेत्रीकरणाय प्रयुञ्जीतेति वाक्यार्थः ॥ १९ ॥

इति कल्कीकृतसूतं घनकान्तमधुघृतादिसंयुक्तम् ।

भुक्त्वाऽमरतां गच्छेत्क्षेत्रीकरणं प्रधानमिदम् ॥ २० ॥

इत्युक्तविधानेन कल्कीकृतं सूतं भुक्त्वा, अमरतां देवत्वं गच्छेत् । इति किं ? घनकान्तमधुघृतादिसंयुक्तं घनोऽभ्रकः, कान्तं लोहजाति, मधु क्षौद्रं, घृतमाज्यं, आदिशब्दात्सिता ग्राह्या, एतैः संयुक्तं सत् कल्कीकृतं; इदं च प्रधानं क्षेत्रीकरणं क्षेत्रीक्रियतेऽनेनेति ॥ २० ॥ इत्यारोटक्रिया ॥

अथ कृष्णं वा पीतं वा[2] संयोज्यं[3] घनं शिखिप्रभं बहुशः ।

सुरभीक्षीरनिषिक्तं गतगिरिदोषं रसायने योज्यम् ॥ २१ ॥

अथ पत्राभ्रक्रिया । कृष्णं श्यामवर्णं घनं अभ्रं, पीतं पीतवर्णं घनं वा, बहुशो नैकवारं, शिखिप्रभं अग्निप्रभं सत् सुरभीक्षीरनिषिक्तं सेचितं कार्यं; पुनर्गतगिरिदोषं यथा स्यात्तथा गता गिरिजा दोषा महीधरसंभवा दोषा यस्मात् तदेवं संशोधयित्वा, तत् घनं रसायने जराव्याधिविनाशकरणे योज्यम् ॥ २१ ॥

निश्चन्द्रिकमपि शुद्धं विडङ्गत्रिफलाज्यमधुसमायुक्तम् ।

प्रतिदिवसं पलमेकं भुक्त्वा क्षीराशनो विधिना ॥ २२ ॥

अभ्रकयोगमाह—निश्चन्द्रिकमित्यादि । घनं निश्चन्द्रिकमपि शुद्धं

---

१ लोहचूर्णं पश्चाद्विडङ्ग ख. ग. । २ "वा" इति न पठनीयम । सं० । ३ संयोज्य ग. ।

चन्द्रिकारहितमपि निर्दोषं त्रिडङ्गत्रिफलाज्यमधुसमायुक्तं कृमिघ्न-हरीतकीबिभीतकामलकघृतक्षौद्रमिलितं, प्रतिदिवसं प्रतिदिनं, एक-पलप्रमाणं सर्वं भुक्त्वा विधिना शुद्धशरीरविधानेन क्षीराशनो भवेत् क्षीरेण सह शाल्योदनाशनं समाचरेदित्यर्थः ॥ २२ ॥

त्रिकटुकविडङ्गत्रिफलामाक्षिकशिलाजतुयुतं व्योम् ।
क्षीरौदनमश्नीयाज्जीवति जन्तुः शतं वर्षम् ॥ २३ ॥

तच्चाह—त्रिकटुकेत्यादि । व्योम अभ्रकं, त्रिकटुकविडङ्गत्रिफला-माक्षिकशिलाजतुयुतं पिप्पलीमरिचनागरहरीतकीबिभीतकामलक-क्षौद्रशिलाजतुमिलितं, अश्नीयाद्भक्षयेत् । पुनः क्षीरौदनं पथ्यमश्नी-यात् । एवं कृते सति जन्तुः शतं वर्षं जीवति 'जन्तुजन्युशरीरिणः'' इत्यमरः । इति पत्राभ्रकप्रक्रिया ॥ २३ ॥

इत्येवमादयोऽन्ये काञ्जिकयुक्ताश्च कीर्तिता बहुशः ।
पत्राभ्रकप्रयोगा वर्ज्या निर्युक्तिकास्ते हि ॥ २४ ॥

अभ्रकस्योत्तरोत्तरं दर्शयन्नाह—इतीत्यादि । इत्येवमादयः इति पूर्वोक्ता योगा आदयो येषां ते; अन्ये काञ्जिकयुक्ताश्च काञ्जिकेनार-नालेन युक्ताः योगीकृताः ग्रन्थान्तरे रसावतारादौ बहुशः कीर्तिताः कथिताः, ते पत्राभ्रकयोगाः निर्युक्तिकाः निर्युक्ते भवा इक्प्रत्यया-न्तास्ते वर्ज्याः सेवनेऽयोग्या इत्यर्थः ॥ २४ ॥

ये पत्राभ्रकयोगा रसायनार्थं[1] कीर्तिता[2] विधिना ।
अज्ञातद्रव्यगुणैस्तैरुपदिष्टा जरामृत्युः* ॥ २५ ॥

अविधिना पत्राभ्रकयोगो विकारायेत्यत आह—य इत्यादि । ये अज्ञातद्रव्यगुणैः अज्ञाता द्रव्याणां अभ्रादिनां गुणा यैस्तैरेवंविधैः पुंभिः, विधिना सामान्यविधानेन, पत्राभ्रकयोगाः रसायनार्थे कीर्तितास्तैरेव जरा मृत्युश्च उपदिष्टः जरा पालित्यं, मृत्युर्व्याधिः ॥ २५ ॥

अप्राप्तलोकभावं[3](?) घनोऽस्य जठराग्निमुपशमं नयति ।

---

१ त्रिकटु वि० इति पठनीयम् । सं० । २ "प्रकीर्तिता' इति पठनीयम् । सं० । ३ अप्राप्तलोपभावं इति पठनीयम् । सं० ।

* रसरत्नसमुच्चयेऽपि—
यैरुक्तं युक्तिनिर्मुक्तैः पत्राभ्रकरसायनम् ।
तैर्दिष्टं कालकूटाख्यं विषं जीवनहृतये ॥

अग्निं विनापि नश्यति परिभूतो विविधरोगगणैः ॥ २६ ॥

जरामृत्योरुपदेशे हेतुमाह—अप्राप्तेत्यादि । अप्राप्तलोकभावं (?) यथा स्यात्तथा अस्य कर्तुः घनः । जठराग्निं विनापि पुमान् नश्यति नाशं प्राप्नोति । किंभूतः सन् ? विविधरोगगणैः नानारोगसमूहैः, परिभूतो विजितः सन्, इति वाक्यार्थः । ( काष्ठे[1] स्थितमपि घनपटलमध्येऽपि अभ्रेऽभ्रसत्त्वं स्थितं तदाह अभ्रसत्त्वं घनसारं घनपटले स्थितमपि निजकार्यं स्वकीयकृत्यं तथा न कुरुते, वह्निरग्निः । काष्ठे दारुणि स्थितः सन् निजकार्यं न कुरुते तु पुनः यथा घृतं पयसि दुग्धे स्थितं सत् स्वकार्यं न कुरुते चाग्रहिरिव घनस्थमिव मध्ये स्थितं कार्यं कुरुतेऽतिनिःसृतं सत् पृथग्भूतं सत् निजकार्यं कुरुत इति भाव.* ?) ॥ २६ ॥

अभ्रस्य रसायनिनां भक्ष्यमिह कीर्तितं परं सत्त्वम्[3] ।

त्रिविधं गगनमभक्ष्यं काचः किट्टं च पत्ररजः ॥ २७ ॥

भक्ष्याभक्ष्यमभ्रमाह—अभ्रस्येत्यादि । अभ्रकसत्वमिह देहीकरणे रसायनिनां जराव्याधिविनाशकर्तॄणां, परमुत्कृष्टं भक्ष्यं अशनयोग्यं कीर्तितम् । पुनस्त्रिविधं त्रिप्रकारं, गगनमभ्रं, अभक्ष्यं अभोज्यम् । किं तत् ? काचः काचरूपं, किट्टं मलरूपं, पत्ररजः सामान्याभ्रचूर्णं चेति त्रिविधमित्यर्थः ॥ २७ ॥

आदौ घनलोहरजस्त्रिफलारसभावनैश्च निर्घृष्टम् ।

कुर्वीताञ्जनसदृशं[4] स्थगितवस्त्रेण[5] सूर्यकरैः ॥ २८ ॥

अधुना घनसत्वलोहसाधनमाह—आदावित्यादि । आदौ प्रथमं, घनलोहरजः घनमभ्रसत्व, लोहरजः कान्तचूर्णं, त्रिफलारसभावनैः हरीतकीबिभीतकामलकद्रवपुटैर्निर्घृष्टं सत्, अञ्जनसदृशं सौवीराञ्जनतुल्यं कुर्वीत, कैः कृत्वा ? सूर्यकरैः; केन ? स्थगितवस्त्रेण आच्छादितपटेन, वस्त्रेणाच्छाद्य सूर्यकरसन्निधौ धार्यमित्यर्थः ॥ २८ ॥

---

१ "काष्ठे" इत्यारभ्य "मध्येऽपि" इति पर्यन्तं न दृश्यते ख. ग. । २ यथा वह्निः ख. ग. । ३ शस्तम् ग. । ४ कुर्वीत घन स० ख. ग. । ५ स्थगितं व० ख. ग. ।

* अत्र "अभ्रकसत्वं घनपटले स्थितमपि न कुरुते निजं कार्यम् । काष्ठे वह्निः पयसि घृतं वा न यथा निजं कार्यम्" इति श्लोकः कल्पनीयः टीकादर्शनात् ।

इत्थं श्लक्ष्णं कृत्वा विविधकान्तलोहचूर्णसमम्[1]।
लोहघनं च तदेवं भृङ्गेण च साधयेद्बहुशः[2] ॥ २६ ॥

इत्थमित्यादि । इत्थममुना प्रकारेण, श्लक्ष्णं अञ्जनसन्निभं यथा स्यात्तथा घनसत्वकान्तं कृत्वा; पुनर्लोहघनं लोहं मुण्डादि, घनं अभ्रसत्वं, एतदुभयं विविधकान्तलोहचूर्णसमं विविधा नानाजातयः अयस्कान्तभेदाः तेषां चूर्णं तत्समं कृत्वा, भृङ्गेण च बहुशोऽनेकवारं साधयेद्भावयेदित्यर्थः ॥ २६ ॥

त्रिफलाघृतमधुमिश्रितममृतमिदं मासमस्थितं धान्ये।
शस्त्रकटोरिकसंपुटमध्यगतं पूजितं मन्त्रैः ॥ ३० ॥

तच्चाह—त्रिफलेत्यादि । तद्भृङ्गराजेन बहुशो भावितं घनसत्वकान्तं, इदममृतं सुधासमं न मृतममृतं, तत् त्रिफलामधुघृतमिश्रितं हरीतकीबिभीतकामलकघृतक्षौद्रमिलितं, धान्ये कस्यचिदन्नस्यान्तः, मासस्थितं कुर्यात् मासैकपरिमाणं तत्र विधातव्यमिति व्यक्तिः। किंविशिष्टं ? मन्त्रैश्च संपूजितम्। तथा मन्त्रस्तु—"मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय। दिव्याम्बरायै च दिगम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय" इत्यादिभिः ॥ ३० ॥

मासेन तु[3] तदुद्धृत्य[4] ज्ञात्वा बलं तत्प्रयुञ्जीत।
कान्तं विनाऽथ गगनं गगनं विना तथा च कान्तम्[5] ॥ ३१ ॥

तच्चाह—मासेनेत्यादि । धान्यान्मासेन मासैकपरिमाणेनोद्धृत्य बहिर्नीत्वा, पुनरपि बलं ज्ञात्वा, प्रयुञ्जीत भोक्त्रे दद्यात्. अथ विशेषं दर्शयति—कान्तं विना अभ्रकसत्वमेव कृत्वा प्रयुञ्जीत, च पुनर्गगनं विना कान्तं केवलं पूर्वविधानेन साधयित्वा प्रयुञ्जीतेत्यर्थः ॥ ३१ ॥

स्थौल्यं पटलं काचं तिमिरार्बुदकर्णनादशूलानि।
हन्त्यर्शांसि भगन्दरमेहप्लीहादि पालित्यम् ॥ ३२ ॥

फलमाह—स्थौल्यमित्यादि । स्थौल्यमिति मेदोरोगः, पटलकाचतिमिराणि नेत्ररोगाः, अर्बुदं ग्रन्थिविशेषः, कर्णनादः प्रतीतः, शूलमष्टविधं, एतानि हन्ति, अर्शांसि गुदजानि, भगन्दरमेहप्लीहादि भगन्दरः

---

१ विधाय का० ख. ग. । २ भावयेद्ब० ख. ग. । ३ "तु" इति न पठनीयम्। सं०। ४ ततो धृत्य ख. । ततोद्धृत्य ग. । ५ कान्तं च ख.ग.।

गुदव्रणं, मेहः प्रमेहः बीजविकारः, प्लीहा प्लीहरोगः, एते रोगा आदिर्यस्य तत् हन्ति, पालित्यं जरां च नाशयतीत्यर्थः ॥ ३२ ॥

एतत्कुर्वन्[1] मतिमान् गोरसमस्तुप्रधानमश्नीयात् ।
जाङ्गलमुद्गाज्यपयः शाल्योदनं ब्रह्मचर्येण ॥ ३३ ॥

पथ्यमाह—एतदित्यादि । एतन्निष्पन्नौषधभक्षणं कुर्वन् मतिमान् पुरुषः गोरसमस्तुप्रधानं गोरसो गोदुग्धं, मस्तु दधिमस्तु, एवंप्रधानमन्नमश्नीयात् भुञ्जीत । पुनर्जाङ्गलमुद्गाज्यपयोऽश्नीयात् जाङ्गलस्येदं जाङ्गलं, स्वल्पाम्बुशाखीदेशः जाङ्गलः, मुद्गः प्रतीतोऽन्नविशेषः, आज्यं घृतं, पयो दुग्धं वा सलिलं, यन्मुद्गाज्यपयः तच्चाश्नीयात् । च पुनः शाल्योदनमश्नीयात् । एतत्सर्वं ब्रह्मचर्येण कर्तव्यमित्यर्थः । इति सत्वाभ्रक्रिया ॥ ३३ ॥

घनसत्वपादजीर्णः कान्तजीर्णो यत्तीक्ष्णसमजीर्णः[2] ।
क्षेत्रीकरणो परमः प्रयुज्यतेऽपि पुनराखोटः ॥ ३४ ॥

अथ जीर्णरसस्याधिक्यं दर्शयन्नाह—घनेत्यादि । घनसत्वं पादप्रमाणं जीर्णं यस्मिन् सः । कान्तजीर्ण इति पादप्रमाणकान्तजीर्ण इत्यर्थः । पुनस्तीक्ष्णं समं जीर्णं यस्मिन्नेवंविधो रसः । क्षेत्रीकरणं प्रधानं सर्वत्रेत्यर्थः "बद्धो यः खोटतां यातो ध्मातो ध्मातः क्षयं व्रजेत् । खोटो बन्धः स विज्ञेयः शीघ्रं सर्वगदापहः" इति ग्रन्थान्तरे॥३४॥

घनसत्वकान्तसूतं मृतहेम शतावरीरसोपेतम् ।
घृतमधुलीढं वर्षान्निहन्ति मृत्युं जरां चैव ॥ ३५ ॥

घनसत्वमभ्रसारः, कान्तं चुम्बकोत्थं, सूतो रसः, एकवद्भावो द्वन्द्वसमासात्; तथा मृतं हेम पञ्चत्वमाप्तं कनकं च, एतच्चतुष्कं शतावरीरसोपेतं शतमूलीद्रवभावितं, पुनर्घृतमधुलीढं घृतमधुभ्यां लीढं आस्वादितं सत्, वर्षाद्वर्षपरिमाणात्, मृत्युं व्याधिं जरां च हन्ति नाशयतीत्यर्थः ॥ ३५ ॥

एषामेकं[3] योगं क्षेत्रीकरणार्थमादितः कृत्वा ।
संवत्सरमयनं वा निःश्रेयससिद्धये योज्यम् ॥३६ ॥

---

१ एतत्कुर्वीत ख. ग. । २ र्णो तीक्ष्ण ख. । ०र्णोऽथ तीक्ष्ण ग. । ३ एषामप्येकं ख. ग. ।

विशेषमाह एषामित्यादि। एषां पूर्वोक्तानां योगानां मध्ये, आदित आरम्भतः, एकं योगं कृत्वा, निःश्रेयसो मोक्षः तत्सिद्धये निष्पत्तये, संवत्सरं वर्षपरिमाणं, अयनं षण्मासपर्यन्तं, योज्यं 'भोक्तृषु' इति शेषः। 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्' इत्यमरः ॥ ३६ ॥

अभ्रकसस्यकमाक्षिकरसकदरदविमलवज्रगिरिजतुभिः।
वैक्रान्तकान्त[1]तीक्ष्णैर्हाटकताराररताम्रैश्च ॥ ३७ ॥
संयुक्तैर्व्यस्तैर्वा द्वित्रिचतुर्भिर्यथालाभम्।
जीर्णहृ[2]तो रसेन्द्रो रसायने शस्यते स[3]द्भिः ॥ ३८ ॥

बहूनिर्दिशन्विशेषमाह—अभ्रकेत्यादि। अभ्रकः प्रसिद्धः सस्यकश्चपलः माक्षिकं ताप्यं, रसकं खर्परं, दरदं हिंगुलं, विमलं सितमाक्षिकं, वज्रकं हीरकं, गिरिजतु शिलाजतु, एतैः। पुनर्वैक्रान्तेत्यादि वैक्रान्तं वज्रभूमिजं रजः, कान्तं लोहजाति, तीक्ष्णं सारः, एतैश्च। हाटकताराररताम्रैश्च हाटकं हेम, तारं रूप्यं, आरं राजरीतिः, ताम्रं शुल्वं, एतैश्च; एतैरुद्दिष्टैः अभ्रकादिताम्रान्तैः, समस्तैरेकत्रीकृतैः, व्यस्तैर्वा पृथक्कृतैर्वा, यथालाभं लाभमनतिक्रम्य भवतीति यथालाभं, द्वित्रिचतुर्भिर्वा अभ्राद्यैर्जीर्णहृतो रसेन्द्रो जीर्णाभ्रादीनां हृतिर्यस्मिन् स तथोक्तः, रसायने जराव्याधिविनाशने, रसशास्त्रमर्मज्ञैः, शस्यते अभ्रादयः प्रशस्ता उक्ता इत्यर्थः। युग्मम्। "वज्रादिभिर्हृतः सूतो हतसूतसमोऽपरः। शृङ्खलाबद्धनामा स्याद्देहलोहविधायकः॥ अस्य प्रभावाद्वेगेन व्याप्तिर्भवति निश्चितम्" इति ग्रन्थान्तरे ॥ ३७-३८ ॥

विषनागवङ्गबद्धो भुक्तो हि रसः करोति कुष्ठादीन्।
उपरसबद्धे तु रसे स्फुटन्ति भुक्ते तथाङ्गानि ॥ ३९ ॥

कुत्सितविधानं दर्शयन्नाह—विषेत्यादि। विषनागवङ्गबद्धो रसः विषं सक्तुकादिकं, नागः सीसकः, वङ्गं त्रपु, एतैर्बद्धो बन्धनमाप्तः, स भुक्तः सन्, हि निश्चितं, कुष्ठादीन् कुष्ठज्वरक्षयादीन्। उपरसबद्धे रसे उपरसैर्गन्धादिभिः अष्टभिः बद्धो बन्धनमापन्नो योऽसौ रसः तस्मिन्, भुक्ते सति भोक्तुरङ्गानि हस्तपादादीनि स्फुटन्ति ॥ ३९ ॥

घनसत्वकान्तकाञ्चीभास्करतीक्ष्णैश्च चीर्णजीर्णस्य।

---

१ "कान्त" इति ग. पुस्तके नास्ति। २ जीर्णा हन्ति ग.। जीर्णहृतो तथा जीर्णोहृतो इति पाठान्तरद्वयम्। ३ सिद्धिः ख. ग.।

सूतस्य गुञ्जामात्रा माषकमेकं परा मात्रा* ॥ ४० ॥

जीर्णरसस्य मात्रामाह—घनेत्यादि । एतैश्चीर्णजीर्णं पूर्वं चीर्णं कवलितं पश्चाज्जीर्णं जारणमापन्नं तस्य सूतस्य गुञ्जा मात्रा' भक्षणाय, गुञ्जा यथा,—"षट्सर्षपैर्यवस्त्वेको गुञ्जैका तु यवैस्त्रिभिः" इति । परा अन्या मात्रा अन्यजीर्णसूतस्य मात्रा माषमेकं; माषको यथा,—"गुञ्जा-भिर्दशभिः प्रोक्तो माषको ब्रह्मणा पुरा-" इति । एतैः कैः ? घनसत्त्व-कान्तकाञ्चीभास्करतीक्ष्णैः अभ्रकसत्वचुम्बकताप्यताम्रसारैरिति॥४०॥

शतवेधिनो हि[1] गुञ्जा तथा सहस्रैकवेधिनो[2] गुञ्जा ।

अर्धा च लक्षवेधिनः[3] सिद्धार्थः कोटिवेधिनः सूतात् ॥४१॥

अथ वेधविशेषेण[4] परिमाणमाह—शतेत्यादि । शतवेधिनः सूतस्य गुञ्जाप्रमाणा मात्रा ज्ञेया; तथा तेन प्रकारेण सहस्रैकवेधिनः सूतस्यापि गुञ्जामानमेव, लक्षवेधिनः सूतात् अर्धा रक्तिका, पुनः कोटिवेधिनः सूतात् सिद्धार्थः सर्षपमाना । शतांशेन वेधो विद्यते यस्मिन् स शत-वेधी, तस्य शतवेधिनः । एवं सर्वत्र ज्ञेयम् ॥ ४१ ॥

हेमनियोजितसूतं कान्तमणिं[5] विविधगुटिकाश्च ।

जपहोमदेवतार्चननिरतः पुमानिति धारयेत्[6] ॥ ४२ ॥

जपः अघोरादिजप, होमस्तद्दशांशेन हवनं, देवतार्चनं देवतानां गणेशविष्णुरविशिवचण्डीनां अर्चनं, एतेषु निरतो सक्तः, एवंविधः पुमान् । इति किं ? हेमनियोजितसूतं धारयेत् हेम्ना सह नियोजितो मिश्रितो यः सूतः तं; कान्तमणिः कान्तश्चासौ मणिश्च, वा कान्तमणिः कान्तसंज्ञको मणिः, च पुनः विविधगुटिकाः विविधाश्च ता गुटिका-श्चेति ॥ ४२ ॥

शालेस्तु पिष्टकोद्भवभोजनमाज्यं[7] च मुद्गमांसरसैः ।

यवगोधूमान्नानि[8] च गोक्षीरं मस्तु च विशेषात्† ॥ ४३ ॥

---

१ ख. ग. पुस्तके नास्ति । २ ०कवेधतो ग. । ३ ०वेधिनि ग. । ४ वेधविशेषपरिमाणज्ञानम् ग. । ५ ०मणिविबद्ध गु० ग. । ६ सन्धारयेत् ख. ग. । ७ पिष्टिको० ख. । ८ ०धूमान्तानि ख. ग. ।

* आयुर्वेदप्रकाशे तु—घनसत्त्वकान्तकाञ्चीशङ्करतीक्ष्णाभ्रादि-जीर्णस्य । सूतस्य गुञ्जवृद्ध्या माषकमात्रं परा मात्रा । इति पाठान्तर-मुपलभ्यते । †रसरत्नसमुच्चयेऽपि—भुंजीत शालिगोधूमयवषष्टिक-जाङ्गलम् । मुद्गयूषं गवां क्षीरं मस्तु स्नायात्सुखाम्बुना ॥

अथ पथ्यानाह—शालेरित्यादि । शालेः षष्टिकादेः, पिष्टकोद्भव-भोजनं पिष्टकोत्पन्नं च तद्भोजनं चेति । आज्यं घृतम् । कैः सह ? मुद्गमांसरसैः सह मुद्गाः प्रतीताः, अत्र विशेषात् मांसानि भोज्यानि, गोक्षीरं च भोज्यं, पुनर्मस्तु गोरससंभवं विशेषात् भोज्यम् ॥ ४३ ॥

पाने जलमक्षारं मधुराणि यानि कानि शस्तानि ।
पेयं चातुर्जातककर्पूरामोदमुदितमुखम्* ॥ ४४ ॥

पाने अक्षारं जलं मिष्टजलं प्रयोज्यं; पुनः यानि कानि मिष्टानि द्रव्याणि अत्रानुक्तमानि, प्रशस्तानि श्रेष्ठानि; पुनः चतुर्जातककर्पूरा-मोदमुदितमुखं यथा स्यात्तथा द्रव्यं पेयं पातव्यं; चतुर्जातकं त्वक्पत्रै-लानागकेसरं, कर्पूरं घनसारं, एषामामोदेन परिमलेन मुदितं यन्मुखं वासितमुखमित्यर्थः । "युवत्या जल्पनं कार्यं युवत्या चाङ्गमर्दनम् ॥ तस्याः स्पर्शनमात्रेण देहे क्रमति सूतकः"—इति विशेषो ग्रन्थान्त-रात् ॥ ४४ ॥

मद्यारनालपानं तैलं दधि वा रसे नेष्टम् ।
कटुतैलेनाभ्यङ्गं वपुषि न कुर्याद्रसायने मतिमान्† ॥ ४५ ॥

अपथ्यान्याह—मद्येत्यादि । मद्यारनालेत्यादि मद्यं सुरा, आरनालं काञ्जिकं, तयोः पानं; नेष्टं न प्रशस्तं; वा तैलं दधि च नेष्टं तैलं तिलो-द्भवं, दधि दुग्धविकारः, एतयोरपि पानं न प्रशस्तं; कटुतैलेन सर्ष-पतैलेन वपुषि अभ्यङ्गं मर्दनं न कुर्यात् । मतिमान् रसायने अधिकरणे इत्यर्थः ॥ ४५ ॥

दग्धमपक्वममधुरमुष्णं क्षीरं न नष्टमांसं तु ।
पर्युषितं फलमूलं भक्ष्यं नैवात्र निर्दिष्टम् ॥ ४६ ॥

दग्धं द्रव्यं रसायने नेष्टं; अपक्वं च नेष्टं, अमधुरं कटुतिक्तकषाया-म्ललवणं च नेष्टं, उष्णं वह्नितप्तमिति; तु पुनः नष्टमांसं निन्दितमांसं नेष्टं, पुनः पर्युषितं संधानीकृतं एवंविधं फलमूलं फलं मूलं च, अत्र रसायने भक्ष्यं न निर्दिष्टं कथितं "कूष्माण्डं कर्कटी चैव कलिङ्गं

* रसरत्नसमुच्चयेऽप्युक्तं—घनसारचतुर्जातकंकोलकटुकीफलम् । दलं ताम्बूलवल्लीनां रसस्याक्रमणं परम् । इति ।

† अन्यत्रापि—अभ्यंगं कटुतैलेन काञ्जीतैलं सुरां दधि । शोक-वातातपक्रोधचिन्तां च परिवर्जयेत् ॥

कारवेल्लकम् । कुसुम्भिका च कर्कोटी कदली काकमाचिका । ककाराष्टकमेतद्धि वर्जयेद्रसभक्षकः—" इति ग्रन्थान्तरे ॥ ४६ ॥

अथ लङ्घनं न कार्यं यामाधो भोजनं नैव ।

इत्यपनीय निषिद्धं रसराजे धीमता कार्यम्[1] ॥ ४७ ॥

अस्मिन् रसायने लंघनं न कार्यं, पुनर्यामाधः प्रहरमध्ये भोजनं न कार्यमित्यर्थः ॥ ४७ ॥

वर्जितचिन्ताकोपः कुर्याच्च सुखाम्बुना स्नानम् ।

नोच्चाटयेद्ग्रहज्वरराक्षसभूतानि मातृदेवींश्च ॥ ४८ ॥

तच्चाह—वार्जितेत्यादि । वर्जितचिन्ताकोप इति चिन्ता च कोपश्चेति चिन्ताकोपौ तौ वार्जितौ येन सः, एवं विधः सन् सुखाम्बुना सुखोष्णाम्बुना, स्नानं कुर्यात् । ग्रहराक्षसभूतानि नोच्चाटयेत् ग्रहणाद्ग्रहाः पिशाचादयः, ज्वरो रोगराजः, राक्षसाः क्रव्यादाः, भूतानि देवयोनयः, एतानि नोच्चाटयेत् स्वस्थानात् न चालयेत् । पुनर्मातृदेवींश्च मातरः सप्तमातरः, देव्यो दाक्षिण्यादयः, ता अपि नोच्चाटयेत् ॥ ४८ ॥

परमे ब्रह्मणि लीनः प्रशान्तचित्तः समत्वमापन्नः ।

आश्वासयन् त्रिवर्गं विजित्य रसानन्दपरितृप्तः ॥ ४९ ॥

चिन्ताकोपनिरोधे हेतुमाह—परमे इत्यादि । रसायनकर्ता परमे ब्रह्मणि चित्स्वरूपे, लीनः तन्मयतां प्राप्तो भवेत्; प्रशान्तचित्तश्च विषयेभ्यो निवृत्तमना भवेत्, समत्वमापन्नः स्वसुते शत्रौ च निर्वैरं यथा स्यात्तथा, त्रिवर्गं धर्मार्थकामरूपं विजित्य रसानन्दपरितृप्तो भवेत् हर्षपरिपूरित इत्यर्थः ॥ ४९ ॥

यस्त्यक्त्वा शास्त्रविधिं प्रवर्तते स्वेच्छया रसे मूढः ।

तस्य विरुद्धाचारादजीर्णमुत्पद्यते नितराम् ॥ ५० ॥

विधेर्नियतत्वं दर्शयन्नाह—य इत्यादि । यः पुमान् शास्त्रविधिं त्यक्त्वा, स्वेच्छया उच्छृंखलमनसा, रसे सूते, प्रवर्तते स मूढः ज्ञानशून्यः, तस्य पुंसः विरुद्धाचारात् नितरामतिशयेन अजीर्णमुत्पद्यते तद्रसाजीर्णमिति ॥ ५० ॥

---

[1] कार्ये ग. ।

संभवतीहाजीर्णे[1] निद्राऽऽलस्यं ज्वरस्तमो दाहः[2] ।
नाभितलशूलमल्पं[3] जडताऽरुचिरङ्गभङ्गश्च* ॥ ५१ ॥

रसाजीर्णलक्षणमाह—संभवतीत्यादि । इह रसायने अजीर्णं यदा संभवति उत्पद्यते तदा एतानि लक्षणानि स्युः । निद्रा अतिशयेन निद्रा, आलस्यं अङ्गशैथिल्यं, ज्वरः प्रसिद्धः, तमो मूर्च्छा, दाह ऊष्मा, पुनर्नाभितले बस्तौ अल्पमल्पं शूलं, जडताऽऽस्यस्य, अरुचिः निरभिलाषिता, भङ्गोऽङ्गस्य अङ्गमर्दनं, भोक्तुरेतानि लक्षणानि रसाजीर्णे स्युरित्यर्थः ॥ ५१ ॥

ज्ञात्वेत्येवमजीर्णमस्य[4] प्रच्छादनाय योगोऽयम् ।
कार्यो दिवसत्रितयं संत्यज्य रसायनं सुधिया ॥ ५२ ॥

अजीर्णेऽप्युपायमाह—ज्ञात्वेत्यादि । इत्येवमुक्तप्रकारेण निद्रादिलक्षणेनाजीर्णं ज्ञात्वा धीमता पुंसा अस्याजीर्णस्य प्रच्छादनाय विनाशाय रसायनं संत्यज्य दिवसत्रितयं योगः कार्यः ॥ ५२ ॥

†कर्कोटीमूलरसं कषायमथ सिन्धुना पिबेत्रिदिनम् ।
सौवर्चलसहितं वा गोजलसहितं रसाजीर्णे[5] ॥ ५३ ॥

अन्यच्चाय—कर्कोटीत्यादि । कर्कोटीमूलरसं कर्कोटी या वल्ली तस्याः मूलरसं त्रिदिनं पिबेत् वाऽथ कषायं; कथं ? सिन्धुना सैन्धवेन सहितं पिबेत्, वा तत्क्वाथं गोजलसहितं गोमूत्रमिलितं रसाजीर्णे पिबेत् सौवर्चलसहितमिति सौवर्चलस्य प्रतिवापं कर्कोटीरसे निक्षिप्य पिबेत्; त्रिदिनम् सर्वत्रेत्यर्थः ॥ ५३ ॥

पिष्ट्वाऽथ मातुलुङ्गीं पिबति रसं शुण्ठिसैन्धवं प्रातः‡ ।
क्वथितं गोसलिलेन[6] तु रक्षति सम्यक् रसाजीर्णम् ॥ ५४ ॥

---

१ सम्भवति यदाजीर्णे ख.ग.। २ दाहं ग. । ३ ० तले शू० ख.ग. । ४ ज्ञात्वेवेम० ख. ग. । ५ रसं जीर्णे ग. । ६ ख.ग. पुस्तके न पठ्यते ।

* रसरत्नसमुच्चयेऽप्युक्तं—सेवयापरिहार्याणां रसस्याजरणा भवेत् । शूलो नाभितले जाड्यं निद्रालस्यं ज्वरस्तमः । अङ्गभंगोऽरुचिर्दाहः ............ ॥

† ......पिबेत्तत्र दिनत्रयम् । सौवर्चलं सगोमूत्रं कर्कोटीमूलवारिणा ॥ र० र० समुच्चये । आयुर्वेदप्रकाशेऽपि-सिन्धुकर्कोटिगोमूत्रं कारवेल्लीरसप्लुतम् । सौवर्चलसमायुक्तं रसाजीर्णे पिबेन्नरः ॥

‡ मातुलुङ्गस्य वाम्लेन मारिणमन्थं सनागरम् । इति रसरत्नसमुच्चये ।

अन्यच्चाह—पिष्ट्वेत्यादि । मातुलुङ्गस्येयं जटा मातुलुङ्गी तां पिष्ट्वा तस्या रसं शुण्ठीं सैन्धवं च यः पुमान् प्रातः पिबति, तु पुनः क्वथितं तस्याः कषायं गोसलिलेन यः पिबति रसाजीर्णे, तं पुरुषं रक्षति न विनाशयतीत्यर्थः ॥ ५४ ॥

कथमपि यच्चाज्ञानात् नागादिकलङ्कितो रसो भुक्तः ।
तन्नोदनाय च पिबेत् गोजलकटुकारवल्लिशिफाः †॥ ५५ ॥

नागादियुक्त[1]रसभुक्तोपायमाह—कथमपीत्यादि । च पुनः, यत् यस्मात्, नागादिकलङ्कितो रसः नागवङ्गसहितो रसोऽज्ञानात्कथमपि भुक्तः, तन्नोदनाय तस्य नागवङ्गाङ्कितरसस्य नोदनाय गोजलकटुकारवल्लिशिफाः गोजलं गोमूत्रं, कटु तिक्ता, कारवल्लीशिफा कारवल्लीलतायाः शिफा जटा, एतदौषधं पिबेत्, तेन नागवंगादिदोषो विनश्यति ॥ ५५ ॥

शरपुङ्खासुरदालीपटोलबिम्बी[2]श्च काकमाची च ।
एकतमा चेदु[3]दिता शृतामजीर्णे हि सेवेत *॥ ५६ ॥

तच्चाह—शरपुङ्खेत्यादि । आसां औषधीनां मध्ये एकतमा या उदिता कथिता, शृता क्वथिता तां, हि निश्चितं, अजीर्णे सेवेत तेन अजीर्णं नश्यतीति भावः । ताः का औषध्यः ? शरपुङ्खा प्रसिद्धा, सुरदाली देवदाली, पटोलं प्रतीतं नाम, बिम्बी गोला, काकमाची प्रसिद्धा, एता इत्यर्थः ॥ ५६ ॥

अत्यम्ल[4]लवणकटुकै रससंस्रावो जरो भवति ।
अतिमधुरैश्च विनश्यति जाठरवह्निः सततभुक्तैश्च ॥ ५७ ॥

---

१ नागादिकिट्टरस० ग. । २ बिम्बश्च ग. । ३ चेन्निहिता मृता जी० ख. ग. । ४ लवणात्यम्लकटुकै ख. ग. ।

† कटु इत्यत्र पटु इति जयदेवः तन्त्रान्तरसंवादात् । उक्तं च-नागवंगयुतः सूतः प्रमादाद्भक्षितो यदि । सैन्धवं कारवेल्लस्य कन्दं मूत्रैः पिबेद्द्र्यहम् ॥ सैन्धवं पटुरिति ।

* अन्यत्राप्युक्तं— शरपुङ्खां सुरदालीं पटोलबीजं च काकमाचीं च । एषामेकतमं क्वथितमजीर्णे रसायने तु पिबेत् ॥

तच्चाह—अत्यम्लेत्यादि । अत्यम्लं चुक्रादि, अतिलवणं क्षारादि, अतिकटुकं निम्बकटुकीत्यादि, एतैः रससंस्रावो जरो जीर्णकरो भवति, जरतीति जरः । पुनरपि मधुरैः इक्षुरसादिभिः सततभुक्तैः जठरवह्निः कोष्ठाग्निः विनश्यति अग्न्याश्रयो विनश्यतीत्यभिप्रायः ॥५७॥

यः पुनरेवं सततं करोति मूढः समाहारम् ।

तस्य विनश्यत्यग्निर्न खलु[1] क्रामति रसो भवेद्व्याधिः ॥५८॥

तद्विशेषमाह य इत्यादि । यः पुनर्मूढो मूर्खः, अजीर्णानन्तरं अत्यम्ललवणकटुकाहारं सततं निरन्तरं करोति, तस्याग्निः कोष्ठाग्निर्विनश्यति, रसश्च न क्रामति स्वगुणान्न प्रकाशयति । तर्हि किं भवेदित्याह व्याधिर्भवेदित्यर्थः ॥ ५८ ॥

यस्तु महाग्निसहत्वाद्रसाच्छतसहस्रलक्षवेधीशः[2] ।

अनया क्रियया सिद्ध्यति स[3] यत्नाद्रसक्रियायोगात् ॥५९॥

रसाच्छतसहस्रलक्षवेधी भवेत् स यत्नात् अनया पूर्वोक्तक्रियया सिद्ध्यति ॥ ५९ ॥

शतसहस्रलक्षवेधी कोटिरथार्बुदानिर्बुदं वापि ।

पि[4]ष्टं भुञ्जीत र[5]सं बलिसहितं सिद्धिदो भवति ॥ ६० ॥

अथोत्तरविधानेन लक्षणमाह—शतेत्यादि । शतसहस्रलक्षवेधी रसः । बलिसहितं पिष्टं रसं भुञ्जीत, बलिना गन्धकेन सहितम् । शतादारभ्य सहस्रलक्षकोटयर्बुदनिर्बुदानां क्रमेण दशगुणोत्तरं संख्या ज्ञातव्या । एवं कृतः सन् रसः सिद्धिदो यथोक्तगुणकृद्भवतीत्यर्थः[6] ॥६०॥

क्रामति त[7]तो हि सूतो जनयति पुत्रांश्च देवगर्भाभान् ।

स्त्रीषु च निश्चलकामो भवति वलीपलितनिर्मुक्तः ॥ ६१ ॥

पूर्वविधानं प्रशंस[8]यन्नाह—क्रामतीत्यादि । ततः पूर्वविधानतः

१ "खलु" इति ख. पुस्तके नास्ति । "न खलु" इति ग. पुस्तके नास्ति । २ "०द्रसात्सहस्रलक्षकोटिवेधीशः" इति पाठान्तरम् ख. ग. । ३ ख. ग. पुस्तके नास्ति । ४ पिष्टो ग. । ५ रसो ग. । ६ अस्माच्छलोकादनन्तरं एकोऽन्यः श्लोकः पठ्यते । तत्पाठो यथा—आदौ सूतं विधिना क्षेत्रीकरणानन्तरं विधानेन । अल्पवेधकृत्प्रयुज्यते पश्चात् क्रमेण बहुतरवेधी प्रयुज्येत ॥ ६१ ॥ टी० तद्विशेषमाह ॥ ख. ग. । ७ तथा ख. ग. । ८ प्रदर्शयन्नाह ग. ।

सूतः क्रामति स्वगुणान् प्रकाशयति, सूते क्रामति सति देवगर्भाभान् पुत्रान् जनयति देवगर्भवत् आभा कान्तिर्येषां ते तान्, पुनः स्त्रीषु निश्चलः सदास्थायी कामो रत्यभिलाषो वा मदनो यस्य स तथोक्तः, पुनर्वलीपलितनिर्मुक्तः वलयश्च पलितानि च तैर्निर्मुक्तो विवर्जितः, 'वलिश्चर्म जराकृतं' इत्यमरः, पलितं केशश्वेतत्वं, एवंविधो भवति 'पुमान्' इति शेषः ॥ ६१ ॥

बुद्धिर्बलं प्रभावः सह[1] चायुषा वर्धते रसायनिनः ।
प्राप्तस्य दिव्यबुद्धिं दिव्याश्च गुणाः प्रवर्धन्ते ॥ ६२ ॥

पुनः किं स्यादित्याह—बुद्धिरित्यादि । रसायनिनः रसायनं प्राप्तस्य हि पुंसः, बुद्धिर्वर्धते, बलं च वर्धते, केन सह ? आयुषा जीवितकालेन सह, पुनर्दिव्यबुद्धिं प्राप्तस्य रसायनिनः दिव्याः प्रकरणाद् गुणा मेधादयः प्रवर्धन्ते प्रकाशन्त इत्यर्थः ॥ ६२ ॥

एवं रससंसिद्धो दुःखजरामरणवर्जितो गुणवान् ।
खेगमनेन[2] च नित्यं संचरते[3] सकलभुवनेषु ॥ ६३ ॥

तच्चाह—एवमित्यादि । एवममुना प्रकारेण, रससंसिद्धः पुरुषः रसः पारदः, संसिद्धः सम्यक् सिद्धो यस्य वा रसेन संसिद्धः, जरामरणवर्जितो भवति वृद्धत्वव्याधिरहित इत्यर्थः । गुणवांश्च भवति, गुणा मेधादयः । पुनः खेगमनेन आकाशगमनेन नित्यं सकलभुवनेषु समस्तलोकेषु संचरते इत्यर्थः ॥ ६३ ॥

दाता भुवनत्रितये स्रष्टा सोऽपीह पद्मयोनिरिव ।
भर्ता विष्णुरिव स्यात्संहर्त्ता रुद्रवद्भाति ॥ ६४ ॥

दाता भुवनत्रितये स्वर्गमृत्युपाताले भवति सर्वोत्रिक इत्यभिप्रायः। सोऽपि पुमान् इह भुवनत्रितये स्वर्गमृत्युपाताले स्रष्टा सर्जको भवति। क इव ? पद्मयोनिरिव ब्रह्मेव । पुनः भर्ता पालनार्थं त्रिकस्य विष्णुरिव च भवति । पुनः संहर्ता रुद्रवत् भवति । सृष्टिस्थितिविनाशेषु ब्रह्मादीनां त्रयीव स्यादित्यर्थः[4] ॥ ६४ ॥

इदानीं गुटिका वक्ष्ये ।

कान्ताभ्रसत्त्वहेमतारं चार्कैः[5] समांशतः संख्या ।

---

[1] सहायुषा ख. ग. । [2] खगमनेन ग. । [3] रसं च ततसकल० ग. । [4] दित्यर्थः । इति जीर्णरसक्रिया ख. ग. । [5] चार्कांशतः सं० ख.ग. ।

बद्धं सूतसमांशं ध्मातं गोलं कृतं खोटम् ॥ ६५ ॥
बाह्ये रसेन लिप्तं वदनगतं शस्त्रवारकं रोगान् ।
हन्ति हि शरीरसंस्थान् नाम्नाऽमरसुन्दरी गुटिका ॥ ६६ ॥
युग्मम् ।

अमरसुन्दरीगुटिकाविधानं गुणांश्चाह—कान्तेत्यादि । कान्तं चुम्बकं, अभ्रं अभ्रकसत्त्वं प्रतीतं, हेम कनकं, तारं च तत् एकवद्भावो द्वन्द्वत्वात्, पुनरर्कः ताम्रं, एषां कान्तादीनां संख्या गणना समांशतः समभागतो ज्ञेया । पुनः सूतसमांशं पारदेन तुल्यभागं ध्मातं कुर्यात्, 'अन्धमूषायां' इति शेषः । किंकृतं सत् ? बाह्ये बद्धगोलोपरि रसेन मारणायामुक्तद्रवेण लिप्तं सत् ध्मातं कुर्यात् । इत्थं कृतं खोटं पिष्टिस्तम्भः गोलाकारं भवति । तत् वदनगतं मुखान्तःस्थितं, शस्त्रवारकं स्यात् अस्मिंश्च वदने गते सति शरीरे खड्गादीनां प्रहारो न लगति । गुटिरियं नाम्ना अभिधानेन अमरसुन्दरीगुटिका ज्ञेया । इयं शरीरस्था मुखे अन्यस्थले वा स्थिता सती शरीरस्थान् रोगान् हन्ति विनाशयति । अनुक्तमपि मानं पञ्चनिष्कप्रमाणं ज्ञेयमित्यर्थः । इत्यमरसुन्दरी गुटिका । "हेम्ना वा रजतेन वापि सहितो ध्मातो व्रजत्येकतामक्षीणो निबिडो गुडश्च गुटिकाः करोति दीर्घोज्ज्वलाः । चूर्णं तत्पटुवत्प्रयाति विहितं घृष्टो न मुञ्चेन्मलं निर्गन्धो द्रवति क्षणात्स हि मतो बद्धाभिधानो रसः–" इति ग्रन्थान्तरे ॥ ६५ ॥ ६६ ॥

यः पूर्वोक्तः सूतो लक्षादूर्ध्वं च वेधते लोहान् ।
बद्धे सारणयोगैर्मुखस्थे च जारयेद्रत्नम् ॥ ६७ ॥
युक्तः समांशनागैः सुरलोहायस्कान्तताप्यसत्त्वैश्च ।
अभ्रकसत्त्वसमेता गुटिका मृतसंजीवनी नाम ॥ ६८ ॥
हेमयुता गुलुच्छके मुकुटे वा कण्ठसूत्रकर्णे वा ।
मृत्युभयशोकरोगगविषशस्त्रजरासततदुःखसंघातम् ॥ ६९ ॥
यस्याङ्गे निहितेयं गुटिका मृतजीवनी नाम ।

---

१ कृतखोटपिष्टिस्तं गोलं गोलाकारं वदन० ख.ग । २ वदनगते ख.ग । ३ गुटिकाकारोऽतिदीर्घोज्ज्वला ग. । ४ बद्धे रसायनयोगैर्मुखस्थे जारयेद् दृढं नूनम् । इति ग. पुस्तकस्थः पाठः । ५ गच्छुलके ख.ग. । ६ भय इति ग. पुस्तके नास्ति । ७ रोगं ग. ।

सोऽसुरयक्ष[1]किन्नरपूज्यतमः सिद्धयोगीन्द्रैः[2] ॥ ७० ॥
प्रक्षाल्य तोयमध्ये गुटिका घटिकाद्वयं ततः क्षिप्ता ।
तच्चैवं[3] वदनगता मृतकस्योत्थापनं कुरुते ॥ ७१ ॥
तोयं तदेव पिबति स्वस्थं पथ्यान्वितस्ततः पुरुषः ।
लभते दिव्यं स वपुर्मृत्युजरावर्जितः सुदृढम् ॥ ७२ ॥

मृतसंजीवनीगुटिकाविधानं गुणांश्चाह—य इत्यादि । यः पूर्वोक्तो सूतो लक्षादूर्ध्वं कोट्यर्बुदादि, लोहान् रूप्यादीन् वेधते तस्मिन्बद्धे सूते, मुखस्थे प्रकाशमुखयन्त्रे स्थापिते, सारणयोगैः सारणतैलादिभिः, रत्नं वज्रादिकं, जारयेत् । पुनः समांशनागैस्तुल्यांशसीसकैः सूतो युक्तः कार्यः, सुरलोहायस्कान्तताप्यसत्त्वैश्च युक्तः कार्यः सुरलोहं कनकं, अयस्कान्तः कान्तलोहं, ताप्यसत्त्वं माक्षिकसारं, एतैः अभ्रकसत्त्वसमेता सती मृतसंजीवनी नाम गुटिका भवति । पुनस्तत्र मूषायामियं हेमयुता कार्या । पुनरियं गुटिका नित्यं यस्य गुलुच्छके[4] निहिता भवति, वा मुकुटे किरीटे वा कण्ठसूत्रकर्णे कण्ठसूत्रं च कर्णश्च कण्ठसूत्रकर्णं तस्मिन्, वा अङ्गे हस्तपादादौ, तस्य मृत्युभयशोकरोगशस्त्रजरासततदुःखसंघातं 'नश्यति' इत्यध्याहारः । एतेषु स्थानेषु यस्येयं निहिता स्थापिता भवति स असुरयक्षकिन्नरपूज्यतमः असुरा दैत्याः, यक्षा देवयोनयः, किन्नराः तुरंगवक्त्राः, तेषां पूज्यतमो भवति अतिशयेन पूज्यः पूज्यतमः । सिद्धयोगीन्द्रैः[5] पूज्यतमः सिद्धा देवविशेषाः, योगीन्द्राः[6] नागार्जुनादयः । ततोनन्तरं[7] मृतसंजीवनी जलमध्ये क्षिप्त्वा प्रक्षाल्य घटिकाद्वयं वदनगता सती मृतकस्य पुरुषस्योत्थापनं प्रबोधनं कुरुते, यः पुमान् पुरुषः तदेव तोयं गुटिकाक्षालनं, स्वच्छं निर्मलं, पिबति, किंविशिष्टः? पथ्यान्वितो हितावहद्रव्यभक्षणयुक्तः, स पुरुषो दिव्यं वपुः देवशरीरं लभते, किंविशिष्टं दिव्यं पुनः? मृत्युजरावर्जितं व्याधिपालित्यरहितं; पुनः सुदृढं वज्रवत् । गुटिकापरिमाणं पाकविधानं च पूर्ववदित्यर्थः ॥६७॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ इति मृतसंजीवनीगुटिका ।

---

१ ०सुरकिन्नरयक्ष पू० ख. ग. । २ सिद्धयोगेन्द्रैः ग. । ३ तच्चैवं ख. ग. । ४ गुलच्छके ख.ग. । ५-६ योगे० । ७ इयं गुटिका किन्नाम ततो ० ग. ।

कान्तघनसत्त्वकमलं[1] हेम च तारं यथा[2] कृतद्वन्द्वम्।
समजीर्णं बीजवरं वज्रयुतं वज्रिणी गुटिका ॥ ७३ ॥
एषा मुखकुहरगता कुरुते नवनागतुल्यबलम्।
तद्वपुरपि दुर्भेद्यं मृत्युजरारोगनिर्मुक्तम् ॥ ७४ ॥

वज्रिणीगुटिकाविधानं गुणांश्चाह—कान्तेत्यादि। कान्तं च घनं च अनयोः सत्त्वं कान्तघनसत्त्वं; कान्तसत्त्वं चुम्बकसत्त्वं, घनसत्त्वं अभ्रकसारं, कमलं चेति कमलं ताम्रं, च पुनर्हेम स्वर्णं, तारं च रूप्यं, पूर्ववत्[3] यथा येन विधानेन कृतद्वन्द्वं कृतं च तत् द्वन्द्वं चेति बीजवरं समजीर्णं कार्यं; किंविशिष्टं बीजवरं? वज्रयुतं हीरकयुतम्[4]। इयं गुटिका नामतो वज्रिणी; पुनरेषा वज्रिणीगुटिका मुखकुहरगता सती मुखान्तःप्राप्ता सती नवनागतुल्यबलं नवसंख्याका नागाः हस्तिनस्तैस्तुल्यं तत्समं यद्बलं तत्कुरुते; तद्वपुस्तस्य मुखे गुटिकाधारिणो वपुः शरीरं दुर्भेद्यं दुःखेन भेत्तुं शक्यं, पुनर्मृत्युजराव्याधिभिर्निर्मुक्तमित्यर्थः ॥ ७३ ॥ ७४ ॥ इति वज्रिणी गुटिका।

धूमावलोकितरसे पञ्चमहारत्नजारिते सारिते।
बीजेन गगनसत्त्वे माक्षिककान्तप्रयुक्तेन ॥ ७५ ॥
खेचरसंज्ञा गुटिका पतति मुखे क्षिप्तमात्रेण।
देवासुरसिद्धगणैः पूज्यतमो भवति चेन्द्राद्यैः ॥ ७६ ॥

खेचरीगुटिकाविधानं गुणांश्चाह—धूमेत्यादि। धूमावलोकिते धूमवेधिनि, रसे सूते, पञ्चमहारत्नजारिते पञ्चसंख्याकैर्महारत्नैर्वज्रादिभिः तथाच 'वज्रं च मौक्तिकं चैव माणिक्यं नीलमेव च। मरकतं च विज्ञेयं महारत्नानि पञ्चधा' इति। पुनर्माक्षिककान्तप्रयुक्तेन ताप्यचुम्बकमिलितेन बीजेन रसे गगनसत्त्वे सारिते सति खेचरसंज्ञा गुटिका भवति। तस्मिन् गुटिकारूपे रसे क्षिप्तमात्रेण मुखे पतति सति इन्द्राद्यैः देवासुरसिद्धगणैश्च पूज्यतमो भवति। इन्द्रो मघवा आद्यो येषां तैः। देवा अमराः, असुराः दैत्याः, सिद्धा देवविशेषाः; तेषां ये गणाः समूहाः तैः कृत्वा, अतिशयेन पूज्यो भवतीत्यर्थः ॥७५॥ ७६ ॥ इति खेचरसंज्ञागुटिका।

---

१ सत्त्वं ख. ग.। २ कमलहेमतारं च यथा ग.। ३ एतत्पूर्ववत् ख. ग. ४ मिश्रितं च ख. ग.। ५ प्रविष्टा ग.।

रसवादोऽनन्तगुणो द्रवगोलककल्कभेदेन ।
कलितः प्रधानसिद्धैर्यैर्दृष्टस्ते[1] जयन्ति[2] नराः ॥ ७७ ॥

रसवादस्यानन्तत्वं सूचयन्नाह—रसेत्यादि । रसवादः अनन्तगुणः अनन्ता गुणा यस्य स तथोक्तः । अनन्ता अपरिमिताः । केन कृत्वा रसवादोऽनन्तः द्रवगोलककल्कानां प्रत्येकमनन्तत्वात् रसवादोऽप्यनन्तः । किंभूतः ? प्रधानसिद्धैः नित्यनाथादिभिः कलितः रचितः । यैर्महद्भिः सिद्धैः रसवादो दृष्टस्ते नरा जयन्ति सर्वोत्कर्षेण वर्तन्ते॥७७॥

शीतांशुवंशसंभवहैहयकुलजन्मजनितगुणमहिमा ।
स जयति श्रीमदनश्च किरातनाथो रसाचार्यः ॥ ७८ ॥

अथ ग्रन्थकारयितुर्वंशवर्णनमाह—शीतांशुवंशेत्यादि । श्रीमदनो मदनाभिधो राजा जयति सर्वोत्कर्षेण वर्तते । किंविशिष्टः ? शीतांशुवंशसंभवहैहयकुलजन्मजनितगुणमहिमा शीतांशुवंशे चन्द्रवंशे संभव उत्पत्तिर्यस्य तत्, एवंविधं यत् हैहयकुलं तत्र कुले जन्मना उद्भवेन जनितो गुणानां महिमा येन स तथोक्तः । पुनः किंविशिष्टो मदनः ? रसाचार्यः रसविद्याजनक इत्यर्थः ॥ ७८ ॥

यस्य स्वयमवतीर्णा रसविद्या सकलमङ्गलाधारा ।
परमश्रेयसहेतुः[3] श्रेयः[4] परमेष्ठिनः पूर्वम्[5] ॥ ७९ ॥

अथ चास्य कारयितुर्गुणवर्णनमाह—यस्येत्यादि । यस्य कारयितुः श्रीमदनसंज्ञस्य, रसविद्या स्वयं स्वरूपत्वेनावतीर्णा प्रादुर्भूता । किं-

---

१ दृष्टास्ते ख. ग. । २ यजन्ति ग. । ३ परमश्रेयो हेतुः इति पठनीयम् । सं० । ४ श्रेयसि ख. ग. ।

५ एतदनन्तरं डा. पी. सी. रायसंपादिते History of Hindu Chemistry नाम्नि पुस्तके आर्याद्वयमुपलभ्यते; यथा—

येन चतुर्वर्णम्लेच्छादिव्याधादिलब्धसन्नाभम् ।
दाक्षिणरसा गृहीता आदिवराहेणेव महाप्रलये ॥ १ ॥
नष्टशरीरविवर्णा हीनाङ्गाः कुष्ठिनो गुणाद्यस्य ।
अभिनवसोमेश्वरतामापुरपि पुनर्नवैरङ्गैः ॥ २ ॥

विशिष्टा रसविद्या ? सकलमङ्गलाधारा सकलानि च तानि मंगलानि उत्तमरूपाणि तेषामाधारः आश्रयो यस्यां सा । एषा रसविद्या शरीरं अजरामरणं अजरामरं कुरुते, शरीरं च धर्मार्थकाममोक्षाणां मूलं, अतः सकलमंगलाधारेति युक्तम् । पुनः रसविद्या श्रेयसे मुक्तौ परम उत्कृष्टो हेतुः कारणम् । अनयैव रसविद्यया परमेष्ठिनो ब्रह्मणः पूर्वं प्रथमं श्रेयोऽजरामरणरूपं संजातम् ॥ ७६ ॥

तस्मात्किरातनृपतेर्बहुमानमवाप्य रसकर्म[1]निरतः ।
रसहृदयाख्यं तन्त्रं विरचितवान् भिक्षुगोविन्दः[2] ॥ ८० ॥

इति परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपाद-
विरचिते रसहृदयतन्त्रे एकोनविंशतित-
मोऽवबोधः समाप्तः ।

कर्ता स्वनाममहत्त्वं सूचयन्नाह—तस्मादित्यादि । इदं रसतन्त्रं शास्त्रं विरचितवान् कृतवानिति भावः । किंविशिष्टं इदं तन्त्रं ? रसहृदयाख्यं; किं कृत्वा तस्मादित्यादि ॥ ८० ॥

इति श्रीमत्कुरलवंशपयोधिसुधाकरमिश्रमहेशात्मजचतुर्भुजविरचितायां
मुग्धावबोधिन्यां रसहृदयटीकायां रसप्रशंसात्मक
एकोनविंशतितमोऽवबोधः ॥ १६ ॥

समाप्तोऽयं ग्रन्थः ।



---

१ रसकर्मरतः ग.। २ एतदनन्तरं History of Hindu Chemistry नाम्नि पुस्तके आर्याद्वयमधिकमुपलभ्यते, यथा—

नप्त्रा मङ्गलविष्णोः सुमनोविष्णोः सुतेन ग्रन्थोऽयम् ।
श्रीगोविन्देन कृतस्तथागतः श्रेयसे भूयात् ॥ १ ॥
अष्टादशसंस्कारं रसेन्द्रदेवस्य दिव्यतनु दृष्ट्वा ।
लिखितमिदं पुण्यतमं रसहृदयमवाप्यते सकलम् ॥ २ ॥

३ विरचितायां खण्डेलवालान्वय मु० ग. ।

# शुद्धिपत्रम् ।

| अशुद्धपाठा: | पृष्ठा: | पं० | शुद्धपाठा: |
|---|---|---|---|
| भदात् | ३ | ३ | भेदात् |
| वलीन | ३ | ९ | वलीन् |
| किविशिष्ठ: | ३ | १५ | किंविशिष्ट: |
| तच्चारतेति | ३ | २५ | तच्चरतीति |
| तरु | ४ | २४ | तरु: |
| भदाच्च | ५ | ११ | भेदाच्च |
| प्रारम्भे | ५ | २२ | प्रारम्भे |
| यित्यं | ८ | २४ | नित्यं |
| हरमूता | ९ | २६ | हरमूर्तौ |
| काङ्गानं | १५ | ९ | काङ्गानां |
| विद्यते | ,, | १९ | विद्येते |
| मेशराम | १९ | १४ | मेषरोम |
| तल्लक्षण | ,, | २० | तल्लक्षणं |
| राम | ,, | २७ | रोम |
| भूजाद्या: | २० | ९ | भूर्जाद्या: |
| उत | २२ | ६ | उत् |
| तस्मिन | ,, | १७ | तस्मिन् |
| समीचीने: | २४ | २६ | समीचीन: |
| ०शैकविंशत्रिं० | २६ | २ | ०शैकत्रिं० |
| चलितात्र० | ,, | ४ | चलितत्रि० |
| द्वतीय० | ,, | ५ | द्वितीय० |
| पीताक० | ,, | १३ | पीताक्रि० |
| कीर्तिता: | २८ | २७ | कीर्त्तित: |
| केवल | २९ | १८ | कवल |
| अभ्रकादिका अभ्रे अ० | ३२ | १६ | अ० |
| करेण | ३४ | २७ | कारेण |
| जारण | ३५ | २९ | जारणा |

| अशुद्धपाठा: | पृष्ठा: | पं० | शुद्धपाठा: |
|---|---|---|---|
| संङ्ग | ३६ | २८ | सङ्ग |
| शुल्प | ,, | ,, | शुल्ब |
| ०क्षल्लात | ३७ | १० | ०क्षभल्लात |
| जरण | ३८ | २७ | जारण |
| भृगमय | ३९ | २८ | मृणमय |
| प्रोक्त | ,, | २९ | प्रोक्तं |
| कै कृत्वा | ४४ | ४ | कै: कृत्वा |
| तारा० | ४४ | २१ | तार० |
| तृणमेव | ४५ | २० | तृणमेव |
| वन्ध्यार्को० | ४६ | १४ | वन्ध्या-कर्को० |
| अङ्गरा: | ,, | २४ | अङ्गारा: |
| यागस्त० | ४८ | ३ | योगस्त० |
| निवाह्य | ५१ | १३ | निर्वाह्यं |
| ०गान्नमनि० | ५२ | ६ | गाम्ना मनि० |
| स्फुट० | ५६ | ६ | स्फुट० |
| शिलाया | ५६ | २४ | शिलया |
| ति | ५८ | २३ | इति |
| युत | ५९ | १७ | युतं |
| यन्त्र | ६४ | १६ | यन्त्रं |
| सिद्धोदशे | ६५ | १४ | सिद्धोपदेश |
| शष: | ६९ | १६ | शेष: |
| दग्ध | ७१ | १७ | दग्धं |
| सिर्पी | ,, | २५ | त्रिपर्णी |
| अम्लनेति | ७२ | ४ | अम्लेनेति |
| मारण | ,, | १२ | जारण |

| अशुद्धपाठाः | पृष्ठाः | पं० | शुद्धपाठाः |
|---|---|---|---|
| शाक्ति | ७३ | ५ | शुक्ति |
| तन्त्रान्त्रे | ,, | ३० | तन्त्रान्तरे |
| समलायोः | ७४ | ३० | समलयोः |
| मूत्राद्दयो | ,, | ,, | मूत्रयो |
| न्येशास्त्रे | ७६ | ४ | न्यशास्त्रे |
| अमाण | ,, | ८ | प्रमाण |
| रसं | ८० | ४ | रस |
| मूल्का | ८१ | २६ | मूलका |
| लेलीतवं | ८२ | २१ | लेलीतकं |
| पुटा | ८७ | २ | पुटो |
| कार्यो | ८८ | २२ | कार्यौ |
| हेभ | ८९ | १४ | हेम |
| सस्यक | ९१ | १२ | सस्यकं |
| आलं,हरितालं | ९२ | १ | आलं हरितालं, |
| समुच्चयं | ९३ | ३० | समुच्चये |
| काचत् | ९४ | २९ | केचित् |
| तिचूर्ण | ९९ | २४ | तिलचूर्ण |
| नागवङ्गो | १०१ | ११ | नागवङ्गौ |
| मद्वन्द्वख्ये | १०३ | २ | मद्वन्द्वाख्यै |
| शाद्ध | १०७ | ६ | शुद्ध |
| त्रिकं | १०८ | १७ | त्रिकं |
| त्रितयं | ,, | २० | त्रितयं |
| वङ्गं | ११२ | २५ | वङ्गं |
| ह्वितौषधीरि | ११५ | ४ | हितौषधीभिरि |
| द्रते | ११८ | ६ | द्रुते |
| द्रत | ,, | १६ | द्रुत |
| अरोटं | ११९ | १६ | आरोटं |
| काथं चतुर्गुणं, | १२२ | २८ | काथं, चतुर्गुणं |
| दीरं | ,, | ,, | दीरं, |
| पठनीयम् म। | १२४ | ,, | पठनीयम्। |
| श्लल- | १२५ | २४ | श्ल- |
| घ्राङ्गुसु० | १२६ | १४ | घ्राङ्गुलसु० |
| द्रतं | १२७ | १० | द्रुतं |
| संवेष्ट्यति | १३० | ३० | संवेष्टयति |
| विंख्यातः | १३३ | १९ | विख्यातः |
| रोषधै | १४० | २३ | रौषधै |
| सामयाति | १४२ | १५ | समायाति |
| प्रतीतंः | १४४ | १ | प्रतीतः |
| हमार्धेन | १४६ | १२ | हेमार्धेन |
| कोर्नाव | १५३ | १ | कोर्नाविं० |
| विडङ्ग | १५४ | १३ | विडङ्ग |
| कृतास्तैल० | १५६ | २१ | कृतांस्तैल० |
| अभ्रादिनां | १५९ | २२ | अभ्रादीनां |
| मभ्रसत्व | १६० | ,, | मभ्रसत्वं |
| साद्धि | १६३ | ८ | साद्धिः |
| ०तुभित्रा | ,, | १६ | ०तुर्भिर्या |
| प्राक्तो | १६४ | ६ | प्रोक्तो |
| सौचवर्चल | १६७ | १५ | सौवर्चल |
| अन्यश्चाय | ,, | १६ | अन्यश्चाह |

# अलभ्यसंस्कृतपुस्तकानां सूचीपत्रम्

१. एकादशोपनिषदः—ईशाद्यष्टसु श्रीमदुदासीनवर्यामरदासाख्य-विदुषा विरचितयोपनिषन्मणिप्रभया छान्दोग्यबृहदारण्यकोर्नित्यानन्दाश्रमविरचितया मिताक्षरया कैवल्ये च शंकरानन्द विरचितया दीपिकया समलङ्कृता—चतुर्थावृत्ति—अत्युत्तमपक्की कपड़े की जिल्द सहित मु० ६) रु०

२. बार्हस्पत्य अर्थशास्त्रम्—अर्थशास्त्रस्य अतिप्राचीनोऽयं ग्रन्थः बृहस्पतिप्रणीतः। डा० थामसकृतांगलअनुवाद सहितं मू० २॥)

३. जैमिनीयगृह्यसूत्रम्—श्रीनिवासकृत विषमस्थलव्याख्यया डा० कलन्दकृतांगलानुवादेन च सहितम् मूल्यम् ६) रु०

४. आर्यविद्यासुधाकरः—ग्रन्थोऽयं समस्तार्यवर्यविद्याविवेकविनय-नय-विज्ञान-शौर्यौदार्यचातुर्यादिकथाप्रकाशको दाक्षिणात्येन द्विजन्ममूर्धन्येन चिमणाजीतनूजेन पण्डितप्रवरेण यज्ञेश्वरेण विरचितः मूल्यम् ८) रु०।

५. कौटिल्यार्थशास्त्रम्—नयचन्द्रिकानामकप्राचीनटीकयाटिप्पण्या च सहितः। इतः २२०० वर्षाणिपूर्वमस्य ग्रन्थस्य निर्माणकालः। सभ्यसंसारे भारतस्य स्थानमनेनैकेनैव ग्रन्थेन अत्युच्चतां नीतम्। संस्कृतसाहित्ये इदमेवैकं ग्रन्थरत्नमेव भारतीयामार्थिकीं राजनैतिकीं सामाजिकीं च सभ्यतां विस्तरेण बोधयति। अथ अद्यतनानां स्वप्नेऽप्यगोचरस्तास्ता वैज्ञानिकवैचित्रीरत्रोपलभ्यन्ते याभिराश्चर्याक्रान्तो भवत्यद्यतनो विधिम्मन्यो वैज्ञानिकसंसारः यूरोपमहायुद्धसमये ये ये नवा आविष्कारा विज्ञानसंविद्गर्भादुद्भूतास्तेषु भूयांसः परसेनासंमोहकविषगन्धधूपनिर्माणप्रयोगविधिप्रभृतयः प्राचीनैर्भारतीयैः करामलकीकृता आसन्निति अत एव ग्रन्थप्रकाण्डाज्ज्ञायते। किञ्च वर्तमानवैज्ञानिकम्मन्यपाश्चात्यवर्गेण लेशतोऽप्यविदिताः अग्निस्तम्भनादृश्याञ्जनक्षुधावारण प्रभृतयोऽद्भुता विषया अप्यनेकेऽत्रोपलभ्यन्ते। सर्वथा ग्रन्थोऽयं विदुषां परिशीलनीयः संग्राह्यश्च। भागद्वयमुद्रितस्य उत्तमसंस्करणस्य मूल्यं १०) रु०। साधारण ८)

६. नीलमतपुराणम्—काश्मीरदेशस्येतिवृत्तम्। कल्हणविरचि राजतरङ्गिणीतोऽप्यति प्राचीनोऽयं ग्रन्थः। कल्हणो हि तत्र तत्र स्वग्रन्थे ग्रन्थाममुमुद्धरति। इतिहासरहस्यमवजिगमिषूणां कृतहेत्रयमत्यन्तमुपयोगी मू० ५) रु०।

# वैद्यक पुस्तकें।

७. चक्रदत्त=श्रीचक्रपाणि विरचित तथा शिवदास सेन कृत तत्वचंद्रिका नामक सरल संस्कृत व्याख्या सहित पक्की कपड़े की जिल्द गलेज़ कागज मू. ५) रु.

८. रसकौमुदी=श्रीमद्भिषग्वरज्ञानचन्द्रशर्मणा विरचिता ॥)

९. पारदयोगशास्त्र=श्रीमद्रसायनाचार्य शिवराम योगीन्द्र विरचितम् ॥)

१०. नव नावनीतक–यह पुस्तक लगभग १७०० वर्ष का प्राचीन वैद्यक ग्रन्थ है। पूर्वीय तुर्किस्तान से श्रीयुत बावर महोदय को त्रुटित अंशों में मिला था वही पं० सदानंद जी शास्त्री ने सब त्रुटित अंशों को पूर्ण करके भाषा टीका कर दी है तथा साथ में ही कई एक नवीन योगों का (जो कि बड़े महत्व के हैं) भी इसमें समावेश किया है, पक्की कपड़े की जिल्द सहित ३०० पृष्ठ की पुस्तक का मूल्य केवल ३) रु० है।

११. भैषज्यरत्नावली–गोविन्ददास प्रणीत तथा लाहौर के सुप्रसिद्ध अनुभवी कविराज नरेंद्रनाथ जी मिश्र द्वारा संशोधित तथा आयुर्वेदाचार्य जयदेव विद्यालंकार कृत भाषा टीका सहित। इस संस्करण में खास विशेषता यह है कि औषधियों की मात्रा (Doses) को समयानुकूल बना दिया है। संपूर्ण पुस्तक लगभग १५०० पृष्ठ में समाप्त है। मूल्य केवल ८) रु०।

१२-रसेन्द्रसारसंग्रह–श्रीगोपाल कृष्ण भट्टकृत श्रीयुत नरेन्द्रनाथजी मिश्र द्वारा संशोधित तथा श्री युत कविराज विद्याधरजी विद्यालंकार कृत सरल भाषाटीका सहित- इस में सब यन्त्रों के चित्र भी दिये गये हैं पुस्तक बहुत बढ़िया छपी है और विद्यार्थियों के अति उपयोगी है मुल्य ४)

पुस्तकप्राप्तिस्थानम् :—

## मोतीलाल बनारसीदास

अध्यक्ष—पंजाब संस्कृतपुस्तकालय सैदमिट्ठा बाजार लाहौर